गपुष्पाणितालीसंलवणानिच। प्रत्येकमेकभागाःस्युःपि
प्पलीमूलचित्रकैः ६६ त्वक्कणातिन्तिडीकंचजीरकंचद्वि
भागिकाः। धान्याम्लवेतसौविश्वंभद्रैलाबदराणिच ६७
अजमोदाजलधरःप्रत्येकंस्युस्त्रिभागिकाः। सर्वौषधचतु
र्थांशंदाडिमस्यफलंभवेत् ६८ द्रव्येभ्योनिखिलेभ्यश्चसि
तादेयार्द्धमात्रया। महाखाण्डवसञ्ज्ञंस्याच्चूर्णमेतत्सुरोचन
म् ६९ अग्निदीप्तिकरंहृद्यंकासातीसारनाशनम्। हृद्रोगकं
ठजठरमुखरोगप्रणाशनम् ७० विसूचिकांतथाध्मानमर्शो
गुल्मक्रिमीनपि। छर्दिपञ्चविधांश्वासंचूर्णमेतद्व्यपोहति
७१ चित्रकस्त्रिफलाव्योषंजीरकंहबुषावचा। यवानीपिप्प
लीमूलंशतपुष्पाजगन्धिका ७२ अजमोदाशटीधान्यंवि
डङ्गंस्थूलजीरकम्। हेमाह्वापौष्करंमूलंक्षारौलवणपञ्च
कम् ७३ कुष्ठंचेतिसमांशानिविशालास्याद्विभागिका।
त्रिवृत्त्रिभागाविज्ञेयादन्त्याभागत्रयंभवेत् ७४ चतुर्भागा
शातलास्यात्सर्वाण्येकत्रचूर्णयेत्। पाचनंस्नेहनाद्यैश्च

दूरहोयँ ॥ ६२। ६५ ॥ (अरुचि पर महाखांडवचूर्ण) मरिच, नागकेसर,
तालीसपत्र, पांचौ लोन ये सब समान भाग लेना पीपरामूल, चित्रक, तज, पीपरि,
अमलीकीछाल और जीरा ये सब दो २ भाग लेना धनियां, अम्लवेतस, सोंठ
बड़ी इलायची, वेर, अजमोद और मोथा ये तीन तीन भाग सब द्रव्यकी चौथाई
अनार सबकी आधी मिश्रीदे यह महाखांडव संज्ञक चूर्ण रोचक दीपन हो हृदय
को मलदायकहै, तथा अतीसार हृदयरोग, कंठ जलना, मुखरोग, हैजा, पेट फूलना
बवासीर, गुल्म, कृमिरोग, पंचविधछर्दि और श्वास इन्हाको नाशकरै ॥ ६६ ॥
७१ ॥ (उदररोगपर नारायण चूर्ण) चीता, त्रिफला, सोंठ, पीपरि,
मरिच, जीरा, हाऊबेर, वच, अजवाइन, पीपरामूल, सौंफ, अजमोद, कचूर, धनि-
या, वायविडंग, कालीजीरी, चोक, पुष्करमूल, दोनोंखार, पांचौलोन और कूट
ये सब समान ले इन्द्रायणकीजड़ दो भाग, निशोथ तीन भाग, जमालगोटा तीन
भाग, पीतपुष्पी, सेहुण्डमूल चारि भाग इन सबोंको एकत्रकरि चूर्णकरै कठिन

स्निग्धकोष्ठस्यरोगिणः ७५ दद्याच्चूर्णविरेकायसर्वरोगप्र णाशनम्। हृद्रोगेपाण्डुरोगेचकासेश्वासेभगन्दरे ७६ मन्दे ग्नौचज्वरेकुष्ठेग्रहण्यांचगलग्रहे। दद्याद्युक्तानुपानेनतथा ध्मानेसुरादिभिः ७७ गुल्मेबदरनीरेणविड्भेदेदधिमस्तु ना। उष्णाम्बुभिरजीर्णेच वृक्षाम्लैःपरिकर्तिषु ७८ उष्ट्रीदु ग्धेनोदरेषुतथातक्रेणचागवाम्। प्रसन्नयावातरोगेदाडिमै रर्शसांतथा ७९ द्विविधेचविषेदद्याद्घृतेनविषनाशनम्। चूर्णनारायणंनामदुष्टरोगगणापहम् ८० हवुषात्रिफलाचै वत्रायमाणाचपिप्पली। हेमक्षीरस्तवृच्चैव शातलाक टुकावचा ८१ नीलनीसैन्धवंकृष्णालवणंचेतिचूर्णयेत्। उष्णोदकेनमूत्रेणदाडिमात्रिफलारसैः ८२ तथामांसर सेनापियथायोग्यंपिबेन्नरः। अजीर्णप्लीहगुल्मेषुशोफा र्शोविषमाग्निषु ८३ हलीमकामलापाण्डुकुष्ठाध्माना दरेष्वपि। शुण्ठीहरीतकीकृष्णात्रिवृत्सौवर्चलंतथा।

कम् । शुण्ठीहरीतकीचेतिक्रमवृद्ध्याविचूर्णयेत् । वडवा नलनामैतच्चूर्णंस्यादग्निदीपनम् १ अजमोदाविडङ्गा निसैन्धवंदेवदारुच । चित्रकःपिप्पलीमूलंशतपुष्पाचपि प्पली २ मरिचंचेतिकर्षांशंप्रत्येकंकारयेद्बुधः । कर्षा स्तुपञ्चपथ्यायाःदशस्युर्वृद्धदारुकात् ३ नागराच्चदशैव स्युःसर्वाण्येकत्रचूर्णयेत् । पिबेत्कोष्णजलेनैवचूर्णंचगुड सम्मितम् ४ भक्षयेदथवासम्यक्परश्वयथुनाशनम् । आ मवातरुजंहन्ति सन्धिपीडांचगृध्रसीम् ५ कटिपृष्ठगुदा स्थनाञ्चजङ्घयोश्चरुजंजयेत् । तूणीप्रतूणीविश्वाचीक फवातामयाञ्जयेत् ६ हिङ्गुपाठाभयाधान्यंदाडिमंचित्रकः शटी । अजमोदात्रिकटुकंहवुषाचाम्लवेतसम् ७ अजग न्धातिन्तिडीकंजीरकंपौष्करंवचा । चव्यंक्षारद्वयंपञ्चलव णानिविचूर्णयेत् ८ प्राग्भोजनस्यमध्येवाचूर्णमेतत्प्रयो

अग्नि दीप्त व रुचिको उपजाताहुआ कफको नाशताहै ॥ १०० ॥ ( मन्दाग्नि पर वडवानलचूर्ण ) सेंधा पीपरामूल, पीपरि, चाव, चीता, सोंठ और बड़ी हड़ क्रमसे बढ़ाय चूर्ण करै जैसे सेंधा १ माशा तौ पीपरामूल २ माशा पीपरि ३ माशाभर लेना यह वड़वानल नाम अग्नि को जगाताहै ॥ १ ॥ ( वातादि पर अजमोदादिचूर्ण ) अजमोद, वायविड़ंग, सैंधव, देवदारु, चीता, पीपरामूल, सौंफ, पीपरि ॥ २ ॥ और मिर्चे ये द्रव्य कर्ष कर्ष भर हड़ पांच कर्ष विधारा दशकर्ष ॥ ३ ॥ सोंठ दशकर्ष इन सबोंको चूर्ण कर गुड़मिश्रित करि उष्णोदक से पिये ॥ ४ ॥ अच्छीतरह खाय तौ सूजन दूरहोय और आमवात, गाठि पीड़ा, गृध्रसी वायु ॥ ५ ॥ कटिपीड़ा, पीठ, गुदा, जाघपीर, तूनीवायु, प्रतूनी व यु, विश्वाची, कफरोग और वायुके रोग ये सब नाशहोयँ ॥ ६ ॥ ( शूलादिपर हिंग्वादिचूर्ण ) भुनी हींग, पाढ़ा, बड़ी हड़, धनियाँ, अनारदाना, चीता, कचूर, अजमोद, त्रिकुटा, हाऊबेर अम्लवेतस ॥ ७ ॥ वनतुलसी, इमली की छाल, जीरा, पुष्करमूल, बच, चाव, दोनोंखार और पांचोंलोन इन सबोंको चूर्णकरै ॥ ८ ॥ भोजनादिक के प्रथम अथवा पुराने मद्यके संग या गरम

जयेत्। पिबेद्वाजीर्णमद्येनतक्रेणोष्णोदकेनवा ९ गुल्मे वातकफोद्भूतेविड्ग्रहेऽष्ठीलिकासुच। हृद्बस्तिपार्श्वशूलेषु शूलेचगुदयोनिजे १० मूत्रकृच्छ्रेतथानाहेपाण्डुरोगेऽरुचौ तथा। हिक्कायांयकृतिप्लीह्निश्वासेकासेगलग्रहे ११ ग्रह ण्यर्शोविकारेषुचूर्णमेतत्प्रशस्यते। भावितंमातुलुङ्गस्यब हुशःस्वरसेनवा। कुर्याच्चगुटिकाःपथ्यावातश्लेष्मामया पहाः १२ यवानीदाडिमंशुण्ठी तिन्तिडीकाम्लवेतसौ। बदराम्लंचकुर्वीतचतुःशाणमितानिच १३ सार्द्धद्विशा णमरिचं पिप्पली दशशाणिका। त्वक्सौवर्चलधान्याकं जीरकंद्विद्विशाणिकम् १४ चतुःषष्टिमितैःशाणैःशर्करा मत्रयोजयेत्। चूर्णितंसर्वमेकत्रयवानीखाण्डवाभिधम्। १५ नाशयेत्पाण्डुरोगंचहृद्रोगंग्रहणीज्वरम्। छर्दिशोषा तिसारांश्चप्लीहानाहविबन्धताः। अरुचिंशूलमन्दाग्नीचा र्शोजिह्वागलामयान् १६ तालीसंमरिचंशुण्ठीपिप्पलीवं शलोचना। एकद्वित्रिचतुष्पञ्चकर्षैर्भागान्प्रकल्पयेत् १७

जल के साथ खाय॥ ९॥ वात कफ का गुल्म, कोष्ठबन्ध, अष्ठीलिका, हृदय, पेडू, पसुरी, गुदा और योनिके सब शूल॥ १०॥ मूत्रकृच्छ्र, पेट फूलना, पाण्डु, अरुचि, हिचकी, यकृत्, प्लीहा, श्वास, कास, गलरोग॥ ११॥ ग्रहणी और अर्श इनपर यह चूर्ण है बिजौरा के रस में सात भावना दे गोली बांध ले इस से बात कफ रोग नाशहोयँ॥ १२॥ (अरुचिपर यवानीखांडव चूर्ण) अजवाइन, अनारदाना, सोंठ, इमली की छाल, अम्लवेतस और भरबेर ये सब चार चार शाण॥ १३॥ मरिच ढाई शाण, पीपरि दशशाण, तेज, कालानोन, धनियां, जीरा ये दो दो शाण॥ १४॥ शर्करा चौंसठि शाण "शाण चारिमाशे का होताहै" इन सबों का चूर्ण करै इसे यवानीखांडव कहते हैं॥ १५॥ यह पांडु, हृद्रोग, ग्रहणी, छर्दि, शोष, अतीसार, प्लीहा, पेट फूलना, कोष्ठबद्ध, अरुचि, शूल, मन्दाग्नि, अर्श, जीभरोग और गलारोग इन सबोंको विनाशतहै॥ १६॥ (अरुचिपर तालीसादिचूर्ण)

हभस्महरीतक्यौचक्रमर्दकचित्रकौ । भल्लातकाविडङ्गानि-
शर्करामलकंनिशा ३४ पिप्पलीमरिचंशुण्ठीवाकुचीकृत
मालकः । गोक्षुरश्चपलोन्मानमेकैकंकारयेद्बुधः ३५ सर्व
मेकीकृतंचूर्णंभृङ्गराजेनभावयेत् । अष्टभागावशिष्टेनखदि
रासनवारिणा ३६ भावयित्वाचसंशुष्कंकर्षमात्रंततःपिबे
त् । खदिरासनतोयेनसर्पिषापयसाथवा ३७ मासेनसर्वकु
ष्ठानिविनिहन्तिरसायनम् । पञ्चनिम्बमिदंचूर्णंसर्वरोगप्र
णाशनम् ३८ शतावरीगोक्षुरकंबीजंचकपिकच्छुजम् ।
गाङ्गेरुकीचातिबलाबीजमिक्षुरकोद्भवम् ३९ चूर्णितंसर्व-
मेकत्रगोदुग्धेनपिबेन्निशि । नतृप्तियातिनारीभिर्नरश्चूर्ण
प्रभावतः ४० अश्वगन्धादशपलास्तन्मात्रोवृद्धदारुकः ।
चूर्णीकृत्योभयंविद्वान् घृतभाण्डेनिधापयेत् ४१ कर्षैकंप
यसापीत्वानारीभिर्नैवतृप्यति । अगत्वाप्रमदांभूयोबली
पलितवर्जितः ४२ चित्रकंत्रिफलामुस्ताविडङ्गंत्र्यूषणा
नि च । समभागानिकार्याणिनवभागाहृतायसः ४३ एतदे
कीकृतंचूर्णंमधुसर्पिर्युतंलिहेत् । गोमूत्रमथवातक्रमनुपा
नंप्रशस्यते ४४ पाण्डुरोगंजयत्युग्रंहृद्रोगंचभगन्दरम् ।

निम्ब चूर्ण कहते हैं क्योंकि सब रोगों को नाश करता है ॥ ३३ । ३८ ॥ ( शता-
वरिचूर्ण पुष्टिपर ) शतावरि, गुखरू, कौंचके बीज, गुलसकरी, बरियारा,
तालमखाना ॥ ३९ ॥ इनका चूर्ण गोदुग्ध में पिये इस के प्रभाव से स्त्री से तृप्त
न होय और जो स्त्रीप्रसंग न करे तो बली होय बार स्वेत न होयँ ॥ ४० ॥
( पुष्टि पर अश्वगंधादि चूर्ण ) नागौरी असगंध चालीस तोले भर,
विधारा चालीसभर इन दोनों को महीन चूर्ण कर घृतके भाजनमें धरे ॥ ४१ ॥
दशमाशेदूध में पिये तो स्त्रीसे तृप्त न होय ( धातुवृद्धिपर नवायसादि चूर्ण )
चीता, त्रिफला, नागरमोथा, वायविडंग और त्रिकुटा ये सब समान नव अंश पोलाद
भस्म ॥ ४२ । ४३ ॥ इनका चूर्ण शहद और घृतके संगचाटै या गोमूत्र व मट्ठा

शोथकुष्ठोदरार्शांसिमन्दाग्निमरुचिंकृमीन् ४५ अकार करभःशुण्ठीकङ्कोलंकुङ्कुमंकणा। जातीफलंलवङ्गंचचन्द नंचेतिकार्षिकान् ४६ चूर्णानीमानिततःकुर्यादहिफेनपलो न्मितम्। सर्वमेकीकृतंचूर्णंसूक्ष्मंवस्त्रगालितम् ४७ सि तासर्वसमादेयामाषैकंमधुनालिहेत्। शुक्रस्तम्भकरंचूर्णं पुंसामानन्दकारकम्। नारीणांप्रीतिजननंसेवेतनिशिकामु कः ४८ बकुलत्वग्भवंचूर्णंघर्षयेद्दन्तपङ्क्तिषु। वज्रादपिदृढी भूतादन्तास्स्युश्चपलाध्रुवम् ४९ इति श्रीशार्ङ्गधरेमध्य खण्डेचूर्णकल्पनाषष्ठोऽध्यायः॥ ६॥

वटिकाश्चाथकथ्यन्तेतन्नामगुटिकावटी। मोदकोवटि कापिण्डीगुण्डीवर्तिस्तथोच्यते १ लेहवत्साध्यतेवह्नौगुडो वाशर्करायथा। गुग्गुलुंवाक्षिपेत्तत्रचूर्णंतन्निर्मितावटी २ कुर्य्याद्वह्निसिद्धेनक्वचिद्गुग्गुलुनावटी। द्रव्येणमधुना वापिगुटिकांकारयेत्सुधीः ३ सिताचतुर्गुणादेयावटीषु द्विगुणोगुडः। चूर्णाच्चूर्णसमःकार्य्योगुग्गुलुंमधुतत्सम

के साथ॥ ४४॥ तौ पांडु, हृद्रोग, भगंदर, सूजन, कोढ़, उदररोग अर्श मन्दाग्नि, अरुचि और कृमि नाशहोयँ॥ ४५ (स्तंभन पर अकरकरादि चूर्ण) अकरकरहा, सोंठ, कंकोल, केसर पीपरि. जायफल, लौंग और श्वेतचन्दन इन्हें कर्षकर्ष भरले॥ ४६॥ चूर्ण करि पलभर अफीमदे पीसि कपड़छानले॥ ४७॥ और सब के समान खांड देय माशाभर शहदमें चाटै यह चूर्ण वीर्यस्तंभन कर स्त्री पुरुषों को सुख देता है इसलिये कामी पुरुष इसे रातिको सेवन करै॥ ४८॥ (मंजन) मौलसिरीकी छालके चूर्ण को दांतों में घिसाकरै तो हिलते हुये भी दांत वज्र समान होजाते हैं॥ ४९॥ इति श्रीशार्ङ्गधरसुधाकरेचूर्णकल्पनाषष्ठोऽध्यायः ६॥

(अथ वटी कल्पना) वटिका गुटिका वटी मोदक पिंडी गुण्डी और वर्त्ति ये गोली के नाम हैं॥ १॥ गुड़ और खाड दे आगि में पकावै जैसे अवलेह तब गुग्गुलु व चूर्ण उसी पाक में डारि गोली बांधै॥ २॥ विना आगि के योगगुग्गुलु से भी गोली बँधती है और गीली वस्तु तथा शहद से भी बँधती है॥ ३॥ मिश्री

मू. ४ द्रवंचद्विगुणंदेयंमोदकेषुभिषग्वरैः। कर्षप्रमाणंत न्मानंबलंदृष्ट्वाप्रयुज्यताम् ५ इन्द्रवारुणिकामुस्ताशुण्ठीद न्तीहरीतकी। त्रिवृच्छटीविडङ्गानिगोक्षुरश्चित्रकस्तथा ६ तेजोह्वाचद्विकर्षाणिपृथग्द्रव्याणिकारयेत्। शूरणस्यपला न्यष्टौवृद्धदारुचतुष्पलम् ७ चतुष्पलंस्याद्भल्लातःक्वाथये त्सर्वमेकतः। जलद्रोणेचतुर्थांशंगृह्णीयात्क्वाथमुत्तमम् ८ क्वाथ्यद्रव्यात्त्रिगुणितंगुडंक्षिप्त्वापुनःपचेत्। सम्यक्पक्व ञ्ज्ञात्वावैचूर्णमेतत्प्रदापयेत् ९ चित्रकस्त्रिवृतादन्तीते जोह्वापलिकाःपृथक्। पृथक्त्रिपलिकाभागाव्योषैलाम रिचत्वचम् १० निक्षिपेन्मधुशीतेचतस्मिन्प्रस्थप्रमाण कम्। एवंसिद्धोभवेच्छ्रीमान् बाहुशालगुडाभिधः ११ जये दर्शांसिसर्वाणिगुल्मंवातोदरंतथा। आमवातंप्रतिश्यायं ग्रहणीक्षयपीनसान्। हलीमकंपाण्डुरोगंप्रमेहंच विनाश येत् १२ मरिचंकर्षमात्रंस्यात्पिप्पलीकर्षसम्मिता। अर्द्ध

चौगुनी गुड़ दूना चूर्ण लिखे प्रमाणदेना गुग्गुलु शहद बराबर देना ॥ ४ ॥ द्रवस्तु दूनी देना सद्वैद्य यही रीति करें, कर्षभर गोली खाने का प्रमाण है व देह बल दोष देखि खिलावै ॥ ५ ॥ ( इन्द्रारुकी गुटिका अर्शपर ) इन्द्रायण की जड़, नागरमोथा, सोंठ, जमालगोटा के जड़की छाल, हड़, निशोथ, कचूर, बायविडंग, गुखुरू, चीता ॥ ६ ॥ और वच ये सब दो दो कर्ष, जमीकन्द आठ पल, विधारा चारपल ॥ ७ ॥ भिलावां चारपल द्रोण भर पानीमें, औटै, जब चौथाईरहै तब उतारलेय ॥ ८ ॥ छान के उसका तिगुना, गुड़दे पाककरै जब पकनितार उठै तब यह चूर्णडालै ॥ ९ ॥ चीता, निशोथ, जमालगोटाकी जड़ और वच ये पल पल भर त्रिकुटा, इलायची, मरिच और तज तीन तीनपल इनको पीस छानके प्रस्थभर शहद में पूर्वोक्त यह चूर्णयुक्त चैंपने मुवाफिकहो मिलावै तब बाहुशाल गुड़ सिद्धहोता है ॥ १० । ११ ॥ यह सब अर्श, गुल्म, वातोदर, आमवात, नाकटपकना, संग्रहणी, क्षयी, पीनस, हलीमक, पाण्डु और प्रमेह इन सबोंको जीतता है ॥ १२ ॥ ( कासपर मरिचादि गुटिका ) मरिच, पीपरि, कर्ष कर्ष भर

कर्षोयवक्षारःकर्षयुग्मंचदाडिमम् १३ एतच्चूर्णीकृतंयु
ञ्ज्यादष्टकर्षगुडेनहि।शाणप्रमाणांवटिकांकृत्वावक्त्रेविधा
रयेत्। अस्याःप्रभावात्सर्वेपिकासायान्त्येवसंक्षयम् १४गु
डशुण्ठीशिवामुस्तैर्धारयेद्गुटिकांमुखे। श्वासकासेषुसर्वे
षुकेवलंवाविभीतकम् १५ आमलंकमलंकुष्ठंलाजाश्चवट
रोहकम्। एतच्चूर्णस्यमधुना गुटिकांधारयेन्मुखे। तृष्णां
वृद्धांहरत्येषामुखशोषंचदारुणम् १६ विडङ्गंनागरंकृ
ष्णापथ्यामलविभीतकौ। वचागुडूचीभल्लातंसविषंचा
त्रयोजयेत् १७ एतानिसमभागानिगोमूत्रेणैवपेषयेत्।
गुञ्जाभागुटिकाकार्या दद्यादार्द्रकजैरसैः १८ एकामजीर्णे
गुल्मेषुद्वेविसूच्यांप्रदापयेत्। तिस्रस्तुसर्पदष्टेतु चतस्र
स्सन्निपातके। वटीसञ्जीवनीनाम्ना संजीवयतिमानवम्
१९ व्योषाम्लवेतसंचव्यं तालीसंचित्रकंतथा। जीरकं
तिन्तिडीकंचप्रत्येकंकर्षभागिकम् २० त्रिसुगन्धंत्रिशाणं

जवाखार ५ माशे, अनारदाना दो कर्ष ॥ १३ ॥ गुड़ आठकर्ष में चारि चारि माशे
की गोली बांधे सो मुख में धरे राखै इस के प्रभावसे सब खांसी जायँ ॥ १४॥
(श्वासपर गुड़ादि गुटिका) गुड़, सोंठ, हड़ नागरमोथा इन की गोली
जितने गुड़ से बँधे माशे भरकी मुहँमें राखे वो सब श्वास, कास हरै वैसे केवल ब-
हेरा रखने से ॥ १५ ॥ (प्यासपर आंवरादिवटी) आंवला, कमल, कूट,
लाजा, वटजटा इन्हें पीसि शहद में गोली बांधि मुखमें राखे तो महातृषा व मुख
सूखना दूरहो ॥ १६ ॥ (सन्निपातपर संजीवनीगुटिका) वायबिड़ंग,
सोंठ, पीपरि, हड़, आंवरा, बहेरा, बच, गुर्च, भिलावां शुद्धकियाहुआ बच्छनाग ॥
१७ ॥ इन सबोंको समान ले गोमूत्र में खरल करै घुंघची समान गोली बांधे व
अदरखके रसमें खिलावै ॥ १८ ॥ अजीर्ण में गोली एक विसूचिका (हैजा) में
दो सांप के डसे को तीन सन्निपात में चार इसका संजीवनी वटी नामहै मनुष्य को
जिलाती है ॥ १९ ॥ (पीनसादि पर त्रिकुटादिवटी) त्रिकुटा, अम्ल-

रयाद्गुडःस्यात्कर्षविंशतिः । व्योषादिगुटिकासामपी
नसश्वासकासजित् । रुचिस्वरकराख्याताप्रतिश्यायप्र
णाशिनी २१ आमेपुसगुडांशुण्ठीमजीर्णेगुडपिप्पलीम्॥
कृच्छ्रेजीरगुडंदद्यादर्शस्सु सगुडाभयाम् २२ वृद्धदारुक
भल्लातशुण्ठीचूर्णेनयोजितः । मोदकःसगुडोहन्यात्प
ड्विधार्शःकृतांरुजम् २३ शुष्कशूरणचूर्णस्यभागान्द्वात्रिं
शदाहरेत्। भागान्षोडशचित्रस्यशुण्ठ्याभागचतुष्टयम्
२४ द्वौभागौमरिचस्यापिसर्वमेकत्र चूर्णयेत् । गुडेनपि
ण्डिकांकुर्यादर्शसांनाशिनींपराम् २५ शूरणोवृद्धदारुश्च
भागैःषोडशभिःपृथक्।मुसलीचित्रकौज्ञेयावष्टभागमितौ
पृथक् २६ शिवाविभीतकौधात्रीविडङ्गंनागरंकणा। भ
ल्लात पिप्पलीमूलं तालीसंचपृथक्पृथक् २७ चतुर्भाग
प्रमाणानित्वगेलामरिचंतथा । द्विभागमात्राणिपृथक्स
र्वांस्त्वेकत्रचूर्णयेत् २८ द्विगुणेनगुडेनाथवटिकांकारये

वेतस, चाव,तालीसदल,चीता, जीरा और इमली की छाल ये सब कर्ष कर्षभर॥ २०॥और तज,पत्रज व इलायची चारि चारि माशे गुड़ बीस कर्ष यह व्योषादिनाम गुटिका पीनस, श्वास व कासको नाशकरै रुचिकरै कंठस्वर शुद्धकरै व नाकका टपकना बंद करती है ॥ २१ ॥ आंवदोषमें गुड़ सोंठकी गोली देना, अजीर्ण में गुड़ पीपरि, कृच्छ्र में गुड़ जीरा, ववासीर में गुड़ हड़की गोली देना ॥ २२ ॥ ( अर्शपर वृद्धदारुमोदक ) विधारा, भिलावां और सोंठ पीसि गुड़में गोली बांधिदेइ तौ छहों भांतिके अर्शदूरकरै ॥ २३ ॥ ( अर्शपर सूरनवटिका) सूखे सूरनका चूर्ण बत्तीसभाग, चीता सोलहभाग, सोंठ चारभाग ॥ २४ ॥ मरिच दोभाग सब चूर्णकरि गुड़में गोली बांधिखिलावै तौ सब अर्श नाशहोवैं॥ २५ ॥ ( पुनः )सूरन विधारा सोलह सोलह भाग लेय मुसली आठभाग और चीता भी आठभाग लेय ॥ २६ ॥ त्रिफला, विडंग, सोंठ,पीपरि, भिलावां,पिपरा-मूल और तालीस भिन्न भिन्न॥ २७॥ चार चार भाग, तज,इलायची व मरिच दो२

दूबुधः। प्रबलाग्निञ्चकुरुतेतथाशोनाशनापरा २९ ग्रह
णींवातकफजांश्वासंकासंक्षयामयम्। श्लीहानंश्लीपदंशो
थंप्रमेहंचभगन्दरम्। निहन्तिपलितंवृष्यातथामेध्या
रसायनी ३० त्रिफलात्र्यूषणंचव्यंपिप्पलीमूलचित्रक
म्। दारुमाक्षिकधातुश्चदार्वीमुस्तंविडङ्गकम् ३१ प्र
त्येकंकर्षमात्राणिसर्वंद्विगुणितंतथा। मण्डूरंचूर्णयेच्छुद्धं
गोमूत्रेष्टगुणेक्षिपेत् ३२ पक्काचवटकान्कृत्वादद्यात्त
क्रानुपानतः। कामलापाण्डुमेहार्शःशोथकुष्ठकफामयान्।
ऊरुस्तम्भमजीर्णंचश्लीहानंनाशयेदपि ३३ चन्द्रप्रभाव
चामुस्तंभूनिम्बामरदारुच। हरिद्रातिविषादार्वीपिप्पली
मूलचित्रकान् ३४ धान्यकंत्रिफलाचव्यंविडङ्गंगजपिप्प
ली। व्योषंमाक्षिकधातुश्चद्वौक्षारौलवणत्रयम् ३५ ए
तानिशाणमात्राणिप्रत्येकंकारयेद्बुधः। त्वक्दन्तीपत्र
कंचत्वगेलावंशरोचना ३६ प्रत्येकंकर्षमात्राणिकुर्यादेता

भाग इनसबोंका चूर्णकरि ॥ २८ ॥ दूने गुडमें गोलीबांधि खिलावै तौ अग्निप्रबल होय और अर्श जाय ॥२९॥ तथा वातकफजन्य ग्रहणी, श्वास, कास, क्षयी, प्लीहा, फीलपाव, शोथ, प्रमेह, भगंदर, वार स्वेत होना ये सबमिटैं धातुवृद्धि प्रबलकरै यह रसायनीहै ॥ ३० ॥ (कामलादि पर मंडूरवटक) त्रिफला, त्रिकुटा, चाव, पिपरामूल, चीता, देवदारु, सोनामाखी, हल्दी, नागरमोथा, विडंग ॥ ३१ ॥ ये कर्ष कर्ष भर मंडूर शोधकै सबसे दूनाले फिर अठगुने गोमूत्रमें ॥ ३२ ॥ पकाय गोलीबांधि मट्ठेके साथ खाय तौ कामला, पांडु, प्रमेह, अर्श, शोथ, कुष्ठ, कफरोग, गठिया, अजीर्ण और प्लीहा इनको नाशकरै ॥ ३३ ॥ कपूर, बच, नागरमोथा, चिरायता, देवदारु, हल्दी, अतीस, दारुहल्दी, पिपलामूल, चीता ॥ ३४ ॥ धनियां, त्रिफला, चाव, बायविडंग, गजपीपरि, त्रिकुटा, सोनामाखी की भस्म, सज्जीखार, जवाखार तीनोंलोन सेंधा, काला, पांगा ॥ ३५ ॥ ये सबद्रव्य चारचार माशे निशोथ, जमालगोटा, पत्रज, तज, इलायची और बंशलोचन ॥ ३६ ॥ इनको कर्ष कर्षभर बुद्धिमान्

निर्बुद्धिमान्। द्विकर्षहतलोहस्यचतुष्कर्षासिताभवेत् ३७
शिलाजत्वष्टकर्षाःस्युरष्टौकर्षाश्चगुग्गुलोः। एभिरेकत्र
संक्षुण्णैःकर्त्तव्यागुटिकाशुभा ३८ चन्द्रप्रभेतिविख्याता
सर्वरोगप्रणाशिनी। प्रमेहान्विंशतिंकृच्छ्रम्मूत्राघातंत
थाश्मरीम् ३९ विबन्धानाहशूलानिमेहनंग्रन्थिमर्बुदम्।
अण्डवृद्धिंकटीशूलंश्वासंकासंविचर्चिकाम् ४० अन्त्रवृ
द्धिंतथापाण्डुकामलांचहलीमकम्। कुष्ठान्यर्शांसिकण्डूंच
प्लीहोदरंभगन्दरम् ४१ दन्तरोगंनेत्ररोगंस्त्रीणामार्त्तवजारु
जम्। पुंसांशुक्रगतान्रोगान्मन्दाग्निमरुचिंतथा ४२ वा
तपित्तकफंहन्याद्बल्यावृष्यारसायनी। चन्द्रप्रभायाः
कर्षस्तुचतुःशाणोविधीयते ४३ यवानीजीरकंधान्यंमरि
चंगिरिकर्णिका। अजमोदोपकुञ्चीचचतुःशाणाःपृथक्
पृथक् ४४ हिङ्गुषट्शाणिकंकार्यंक्षारौलवणपञ्चकम्। त्रि
वृच्चाष्टमितैःशाणैःप्रत्येकङ्कल्पयेत्सुधीः ४५ दन्तीशटीपौ
ष्करंचविडङ्गंदाडिमंशिवा। चित्रोम्लवेतसःशुण्ठीशाणैः

लेय लोहभस्म दो कर्ष इन सबका चूर्णकरि मिश्री चारकर्ष ॥ ३७॥ शुद्धशिला-
जीत आठकर्ष गूगल आठकर्ष ये सब एकत्रकरि कूटिकै गुटिका सुंदर बनावै ॥३८॥
यह चंद्रप्रभागुटिका सर्वरोग नाशकरै, बीस प्रमेह, मूत्रकृच्छ्र, मूत्राघात, पथरी ॥ ३९ ॥
विबंध, पेटफूलना, शूल, इंद्रिय फूलना, ग्रंथि, अर्बुद, अंडवृद्धि, कटिशूल, श्वास,
कास, कुष्ठभेद ॥ ४०॥ अंत्रवृद्धि, पांडु, कामला, हलीमक, सबकुष्ठ, सर्वार्श, खजुरी,
प्लीहा, उदररोग, भगंदर ॥४१॥ दन्तरोग, नेत्ररोग, स्त्री का ऋतुरोग, पुरुषका धा-
तुरोग, मन्दाग्नि, अरुचि ॥ ४२ ॥ वात पित्त कफ सब नाशकरै बलकरै धातुबढावै
यह रसायन है दशमाशे वा सोलहमाशे वा दोषबल विचारिकै खाय ॥ ४३ ॥
( गुल्महर अजवायनगुटिका ) अजवायन, जीरा, धनियां, मिर्च, विष्णु-
क्रांता, अजमोद, मगरैल। भिन्नभिन्न चारशाण ॥४४॥ हींग छह शाण, दूनों
खार, पांचों लोन और निशोथ ये आठ आठ शाण ॥४५ ॥ जमालगोटा, कचूर

षोडशभिःपृथक्४६बीजपूररसेनैव गुटिकांकारयेद्बुधः। घृतेनपयसामद्यैरम्लैरुष्णोदकेनवा ४७ पिबेत्काङ्कायन प्रोक्तांगुटिकांगुल्मनाशिनीम् । मद्येनवातकेगुल्मेगोक्षीरेणचपैत्तिके ४८ मूत्रेणकफगुल्मंचदशमूलैस्त्रिदोषजम्। उष्ट्रीदुग्धेननारीणांरक्तगुल्मंविनाशयेत् ४९ हृद्रोगंग्रहणीशूलंकृमीनर्शांसिनाशयेत् । नागरंपिप्पलीचव्यंपिप्पलीमूलचित्रकौ । भृष्टहिङ्ग्वजमोदाचसर्षपाजीरकद्वयम् ५० रेणुकेन्द्रयवापाठाविडङ्गंगजपिप्पली । कटुकातिविषाभार्गीवचामूर्वेतिभागतः ५१ प्रत्येकंशाणिकानिस्युर्द्रव्याणीमानिविंशतिः । द्रव्येभ्यस्सकलेभ्यश्चत्रिफला द्विगुणाभवेत् । एभिश्चूर्णीकृतैः सर्वैः समोदेयश्चगुग्गुलुः ५२ वङ्गरौप्यंचनागंचलोहसारंतथाभ्रकम् । मण्डूरंरससिन्दूरंप्रत्येकंपलसम्मितम् ५३ गुडपाकसमंकृत्वाचेमं दद्याद्यथोचितम् । एकपिण्डंततःकृत्वाधारयेद्घृतभाज

पुष्करमूल, वायविडंग, अनारदाना, बड़ीहड़, चीता, अम्लवेतस और सोंठ इन सबोंको सोलह शाणले चूर्ण करै ॥ ४६ ॥ फिर बिजौराके रसमें बटी बांधै घृत, दूध मद्य, नींबूरस और उष्णोदक ॥ ४७ ॥ इनके संग काकायनकी कहीहुई गोली वैद्य खिलावै यह गोली गुल्मको व वातगुल्मको नाशकरै तथा मद्यमें पित्तगुल्मको गोदुग्ध के संग ॥ ४८ ॥ कफ गुल्मको गोमूत्र संग त्रिदोषज गुल्मको दशमूलके क्वाथसाथ स्त्री के रक्तगुल्मको उष्ट्रीदुग्ध संगदेय तो ॥ ४९ ॥ हृद्रोग, ग्रहणी, शूल, कृमिरोग और बवासीरों को नाशकरै ( वातादिरोगपर योगराजगुग्गुलु ) सोंठ, पीपरि, चाब, पिपलामूल, चीता, भुनीहींग, अजमोद, सरसों, दोनों जीरे ॥ ५० ॥ मेवडीबीज, इंद्रयव, पाढ़ा, वायविडंग, गजपीपरि, कुटकी, अतीस, भारंगी, बच, मूर्वा और गुड़ूचे ॥ ५१ ॥ ये सब शाणशाणभर सबका दूना त्रिफलेका चूर्ण सब चूर्ण के समान शुद्ध गुग्गुल ॥ ५२ ॥ वंग, रूपरस, नागेश्वर, लोह, अभ्रक, मंडूर और रससिंदूर इनको पल पल भरदे ॥ ५३ ॥ गुडपाक करि रस और सब

मजीर्णंच व्यवायं श्रममातपम् । मद्यंरोषंत्यजेत्सम्यग्गु
णार्थीपुरसेवकः ७३ त्रिपलंत्रिफलाचूर्णंकृष्णाचूर्णपलो
न्मितम् । गुग्गुलुःपञ्चपलिकः क्षोदयेत्सर्वमेकतः ७४
ततस्तुवटिकांकृत्वा प्रयुञ्ज्याद्वह्न्यपेक्षया। भगन्दरंगुल्म
शोथावर्शांसि च विनाशयेत् ७५ अष्टाविंशतिसङ्ख्या
त्रिपलान्यानीयगोक्षुरात् । विपचेत्षड्गुणेनीरे क्वाथोग्रा
ह्योऽर्द्धशेषतः ७६ ततःपुनःप्रवेत्तत्रपुरं सप्तपलंक्षिपे
त्। गुडपाकसमाकारं ज्ञात्वातत्रविनिक्षिपेत् ७७ त्रिक
टुत्रिफलामुस्तं चूर्णितंपलसप्तकम्। ततःपिण्डीकृतस्या
स्यगुटिकामुपयोजयेत् ७८ हन्यात्प्रमेहंकृच्छ्रंचप्रद
रंमूत्रघातकम् । वातास्रंवातरोगांश्च शुक्रदोषंतथाऽश्म
रीम् ७९ त्रिफलात्रिपलाकार्याभल्लातानांचतुष्पलम् । बा
कुचीपञ्चपलिकाविडङ्गानांचतुष्पलम् ८० हतलोहंतथ
चैवगुग्गुलुश्चशिलाजतु । एकैकंपलमात्रंस्यात्पलार्द्धं

क्वाथसंग गुल्म दूरकरै ॥७२ ॥व खदिरादिक्वाथ संग व्रण व कुष्ठ दूरकरै व खट्टा, तीक्ष्ण, मैथुन, श्रम, घाम, मद्य और क्रोध इनसबोंको त्यागकर जो गुण चाहै तो संयम से रहै ॥७३ ॥( भगंदर पर त्रिफलागुग्गुलु )त्रिफलाचूर्ण तीन पल, पिप्पली चूर्ण पलभर और शुद्धगूगुल पांचपल इनको पीसिकै एकत्रकरि ॥७४ ॥ गोली बांधि रोगीकी अग्नि विचारिकै देय तो भगंदर, गुल्म, शोथ और बवासीर अर्श दूरहोयँ॥७५ ॥(प्रमेह गोक्षुरादिगुग्गुलु)गोखुरू अट्ठाईसपल छः गुणे पानी में काढाकरि अर्द्ध शेषले॥७६॥ फिरि सातपल गूगुलदे पकावै जब गुड पाकसा हो तब जो द्रव्य कहताहूं सोपीसकै डारै ॥७७॥ त्रिकुटा, त्रिफला और नागरमोथा ये सातों पलपलभर मिलाय पिंडीकरि गोलीबांधि तो ॥७८॥ प्रमेह, मूत्रकृच्छ्र, प्रदर, मूत्राघात, वातरक्त, वातरोग, शुक्रदोष और पथरी ये सबनष्टहोयँ ॥७९॥ (कुष्ठ पर त्रिफलामोदक ) त्रिफला तीनपल, भिलावांचार, बकुची पांच, विडंग चार ॥८०॥ लोहभस्म, निशोथ, गूगुल और शिलाजीत इनसबोंको एक एकपल,

पौष्करंभवेत् ८१ चित्रकस्यपलार्द्धस्यात्रिशाणंमारिचंभवेत्। नागरंपिप्पलीमुस्तात्वगेलापत्रकुङ्कुमम् ८२ शाणोन्मितंस्यादेकैकंचूर्णयेत्सर्वमेकतः। ततस्तत्प्रक्षिपेच्चूर्णम्पक्वखण्डेचतत्समे ८३ मोदकान्पलिकान्कृत्वाप्रयुञ्जीतयथोचितान्। हन्युःसर्वाणिकुष्ठानित्रिदोषप्रभवामयान् ८४ भगन्दरंप्लीहगुल्मांजिह्वातालुगलामयान्। शिरोक्षिभ्रूगतान्रोगानन्यान्पृष्ठगतानपि ८५ प्राग्भोजनस्यदेयंस्यादधःकायस्थितेगदे। भेषजंभुक्तमध्येचरोगेजठरसंस्थिते। भोजनस्योपरिग्राह्यमूर्ध्वजत्रुगदेषुच८६ काञ्चनारत्वचोग्राह्यंपलानांदशकंबुधैः। त्रिफलापट्पलाग्राह्यात्रिकटुःस्यात्पलत्रयम् ८७ पलैकंवरुणंकुर्यादेलात्वक्पत्रकंतथा। एकैकं कर्षमात्रंस्यात्सर्वाण्येकत्रचूर्णयेत् ८८ यावच्चूर्णमिदंसर्वंतावन्मात्रस्तुगुग्गुलुः। सङ्कुट्यसर्वमेकत्रपिण्डंकृत्वाचधारयेत् ८९ गुटिकाःशाणमात्रेणप्रातर्ग्राह्यायथोचिताः। गण्डमालांजयत्युग्राम

पुष्करमूल अर्द्धपल ॥ ८१ ॥ चीता अर्द्धपल, मिर्च दो शाण, सोंठि, पीपरि, मोथा, तज, इलायची, पत्रज, केशर ॥ ८२ ॥ इनसबों को शाण शाण भर ले चूर्णकरि सबचूर्ण समान खांडले पाककरि चूर्णडारि गोली बनावै ॥ ८३॥ पलपलमित मोदकबनाय रोग बलदेखि रोगीको खिलावै तो सबकुष्ठ नाशहोयँ व त्रिदोषजन्य रोग ॥ ८४ ॥ भगंदर, प्लीहा, गुल्म, जिह्वा, तालुरोग, ग्रीव, शिर, नेत्र, भौंह और पीठ इन सबोंके रोग नाशहोयँ ॥ ८५ ॥ शरीरके नीचेके रोगनमें भोजनादि ओपधि देना मंदाग्निजनित में भोजन के मध्यदेय शिरःसंबन्धी रोगन में भोजनांत समयमें देना ॥ ८६ ॥ ( गंडमालापर कचनार गुग्गुल ) कचनारछाल दशपल त्रिफला छःपल, त्रिकुटा तीनपल ॥ ८७ ॥ वरुण एकपल, इलायची तज, पत्रज, कर्ष कर्षभर इनसबों को एकत्रकरि चूर्णकरै ॥ ८८ ॥ सर्व चूर्णके समान गुग्गुल पीसि चूर्णमें मिलाय पिंड बनावे ॥ ८९ ॥ चारिमाशेकी गोली बनाय

पचीमर्बुदानिच। ग्रन्थीन्व्रणांश्चगुल्मांश्चकुष्ठानिचभ गन्दरम् ९० प्रदेयश्चानुपानार्थंक्वाथोमुण्डितिकाभवः। क्वाथःखदिरसारस्यपथ्याक्वाथोदकोष्णकम् ९१ निस्तुषं माषचूर्णस्यात्तथागोधूमसम्भवम्। निस्तुषंयवचूर्णंचशा लितण्डुलजंतथा ९२ सूक्ष्मंचपिप्पलीचूर्णंपलकान्युपक ल्पयेत्। एतदेकीकृतंसर्वंभर्जयेद्वोघृतेनच ९३ अर्द्धमात्रे णसर्वेभ्यस्ततःखण्डसमांक्षिपेत्। जलंचद्विगुणंदत्त्वापाच येत्तंशनैःशनैः ९४ ततःपक्वंसमुद्धृत्यमोदकंचपलोन्मित म्। कुर्यात्सायंचतंभुक्त्वापिबेत्क्षीरंचतुर्गुणम् ९५ वर्जनी योविशेषेणक्षाराम्लौद्वौरसावपि। कृत्वैवंरमयेन्नारीवह्वीर्न चीयतेनरः ९६ इति श्रीशार्ङ्गधरेमध्यखण्डेवटककल्पना सप्तमोऽध्यायः ७॥

काथादीनांपुनःपाकाद्घनत्वंसारसक्रिया। सोवलेह श्चलेहःस्यात्तन्मात्रास्यात्पलोन्मिता १ सिताचतुर्गुणा

रोगबल व ओषधिबल देखि रोगीको मातस्समय देय तो गंडमाला, अपची, अर्बुद, ग्रंथि, घाव, कुष्ठ, भगंदर ये नाशहोयँ ॥ ९० ॥ ( अस्यानुपानं ) गुण्डीका क्वाथ वा खैरसारका क्वाथ वा हड़का क्वाथ उष्णोदक में देय ॥ ९१ ॥ ( धातु पुष्टिपर माषादि मोदक ) माष कहे उरददालि धोय चूर्णकरिलेय गेहूँचूर्ण, यवकी गुदीकाचूर्ण, साठी चावरका चूर्ण ॥ ९२ ॥ और पीपरि चूर्ण इनसबों को पलपल भरले सब चूर्णों का आधा गोघृत दे भूँजै ॥ ९३ ॥ चूर्णोंके समान खांड ले तब सबका दूना जलडारि मन्द मन्द आंचदे घोटै ॥ ९४ ॥ जब सिद्धहोजाय तब पलपलभरके लड्डू बांधि सांझको खाय उसपर चारिपल दूधपिये ॥ ९५ ॥ फिर क्षार और खटाई दो रस न खाय स्त्री प्रसंग करै तो वीर्य न द्रवै देह पुष्टरहै ९६ ॥

इति श्रीशार्ङ्गधरसुधाकरेसप्तमोऽध्यायः ॥ ७ ॥

( अथावलेह कल्पना ) द्रव्यको क्वाथसदृश औटावै फिर विशेष आंच देय जब गाढ़ाहोय तब अवलेह कहे लेहभी कहते हैं, मात्रा चारिमुद्रा भर ॥ १ ॥ चूर्णसे

कार्याचूर्णाच्चद्विगुणोगुडः । द्रवंचतुर्गुणंदद्यादितिसर्वत्र निश्चयः २ सुपक्वेतंतुमत्त्वंस्यादवलेहोप्सुमज्जति । खरत्वंपीडितेमुद्रागन्धवर्णरसोद्भवम् ३ दुग्धमिक्षुरसंयूषं पञ्चमूलकषायजम् । वासाक्वाथंयथायोग्यमनुपानंप्रशस्यते ४ कण्टकारींतुलांनीरद्रोणपक्त्वाकषायकम् । पादशेषंगृहीत्वाचतस्मिश्चूर्णानिदापयेत् ५ पृथक्पलानिचैतानि गुडूचीचव्यचित्रकाः । मुस्ताकर्कटशृङ्गीचत्र्यूषणं धन्वयासकः ६ भार्गीरास्नाशटीचैवशर्करापलविंशतिः । प्रत्येकंचपलान्यष्टौ प्रदद्याद्घृततैलयोः ७ पक्त्वालेहत्वमानीयशीतेमधुपलाष्टकम् । चतुष्पलंतुगाक्षीर्याःपिप्पलीनांचतुष्पलम् ८ क्षिप्त्वानिदध्यात्सुदृढेमृन्मयेभाजनेशुभे । लेहोयंहन्तिहिक्कार्त्तिश्वासकासानशेषतः ९ पाटलारणिकाश्मर्यबिल्वारलुकगोक्षुराः । पाण्यौबृहत्यौपिप्पल्यः शृङ्गीद्राक्षामृताभयाः १० बलाभूम्यामलीवासा ऋद्धि

मिश्री चौगुनीदेना गुड़ दूना द्रव्यादि चौगुने यह सर्वत्र रीतिहै ॥ २ ॥ जब आंचदेने पर तारबँधे आ पानीमें पाककी बूँद न बूड़े न घुले तब सिद्ध जाने और अंगुरीके दबाने स फुछदबै तब सुगंध रसादि डारे ॥ ३ ॥ और दूध से ऊखके उत्पत्ति रस यूषस पंचमूल कायसे रूसा काथसे इन अनोपानसे देना अथवा और जो रोगोचित अनोपानहो सो देना ॥ ४ ॥ ( हिचकी और कास श्वासपर भटकटैया-वलेह ) भटकटैया चारिसेरले द्रोणभरजलमें औटै जब चौथाईरहै तब उसमें चूर्ण डारै ॥ ५ ॥ गुर्च, चाब, चीता, नागरमोथा, काकड़ासिंगी, त्रिकुटा, जवासा ॥ ६ ॥ भारंगी रास्ना और कचूर ये सब पलपल भरले चूर्णकरै शक्कर बीसपल घृत आठपल तेल आठपल ॥ ७ ॥ ये सब काढे में औटै अवलेह सिद्धहो ठंढाकरि आठपल शहद, बंशलोचन चारिपल, पिप्पली चूर्ण चारिपल मिलाय ॥ ८ ॥ उत्तम पात्रमें राखै इसे अवलेह से हिचकी, श्वास, व कास, को अशेषतासे नाशकरै ॥ ९ ॥ ( क्षयादि पर च्यवन प्राशावलेह ) सिरस, अग्निमंथ, खम्भारी, पाटल, बेल, स्यो-

प्योवृंहणोबलकृन्मतः २८ युक्त्याकूष्माण्डखण्डवच्छूरणंविपचेत्सुधीः । अर्शसांमूढवातानांमन्दाग्नीनांचयुज्यते २९ हरीतकीशतंभद्रंयवानामाढकंतथा । पलानिदशमूलस्यविंशतिश्चनियोजयेत् ३० चित्रकःपिप्पलीमूलमपामार्गःशटीतथा । कपिकच्छूःशङ्खपुष्पीभार्ङ्गीचगजपिप्पली ३१ बलापुष्करमूलंचपृथग्द्विपलमात्रया । पञ्चपञ्चाढकेनीरेयवैःस्विन्नैःशृतंनयेत् ३२ तत्राभयाशतंदद्यात्क्वाथेनास्मिन्विचक्षणः । सर्पिस्तैलाष्टपलकंक्षिपेद्गुडतुलांतथा ३३ पक्त्वालेहत्वमानीतेसिद्धशीतेपृथक्पृथक् क्षौद्रञ्चपिप्पलीचूर्णंदद्यात्कुडवमात्रया ३४ हरीतकीद्वयंखादेत्तेनलेहेनित्यशः । क्षयंकासंज्वरंश्वासंहिक्काशोंरुचिपीनसान् ३५ ग्रहणींनाशयेदपवलीपलितनाशनः । बलवर्णकरःपुंसामवलेहोरसायनः । विहितोगस्त्यमुनिनासर्वरोगप्रणाशनः ३६ कुटजस्त्वक्तुलांद्रोणेजलस्यवि-

कूष्माण्ड अवलेह बाल वृद्धको देना छाती पुष्टकरै वीर्य बढावै व बलको करै ॥ २८ ॥ (अर्शपर खंड कूष्माण्डावलेह) जैसे कुम्हड़ा की विधिहै सोई सूरन की भी है पेठा और जमींकन्दकी छोटी करें करिदोनोंको एकत्र करि उसी रीतिसे अवलेह बनाय खिलावै तो अर्श,मूढवात और मन्दाग्नि ये सब अच्छेहोयँ ॥२९॥ (क्षयीपर अगस्त्य हरीतकी ) बड़ीहड़ें सौ, अरुयायन एक आढ़क, दशमूल बीसपल ॥ ३० ॥ चीता,पीपरामूल,चिचिरा,कचूर,कौंच,कौड़ाला, भारंगी, गजपीपरि ॥ ३१ ॥ खरियारा और पुष्करमूल सब दैदे पल पांच आढक जलमें पचाय गलाय उतारि छानलेय ॥ ३२ ॥ तिसमें सौ हड़, तेल,घी, आठ पल,गुड़तुलाभर देकर ॥ ३३ ॥ पकावै ठंढाकरि शहद व पीपरिका चूर्ण ये सब एकएक कुड़वडारै ॥ ३४ ॥ इस अवलेह के संग दो हड़ नित्यखाये तो क्षयी का रोग,कास,ज्वर,श्वास, हिचकी, अर्श, अरुचि,पीनस ॥ ३५ ॥ और ग्रहणी ये रोग नाशहोयँ बलवन्त हो श्वेतबालकृष्णहों रूपवानहो पुरुषको यह अवलेहरसायनहै यह अगस्त्यमुनिकी कही हरीतकी सब रोगोंको नाश करती है ॥ ३६ ॥ (अथार्शपर कुरैया अवलेह)

पचेत्सुधीः। कषायंपादशेषंचगृह्णीयाद्वस्त्रगालितम् ३७ त्रिंशत्पलंगुडस्यात्रदत्त्वाचविपचेत्पुनः। सान्द्रत्वमागतंदृष्ट्वाचूर्णानीमानिदापयेत् ३८ रसाञ्जनंमोचरसंत्रिकटुत्रिफलांतथा। लज्जालुंचित्रकंपाठांबिल्वमिन्द्रयवंवचाम् ३९ भल्लातकंप्रतिविषांविडङ्गानिचवालकम्। प्रत्येकंपलसंमानंघृतस्यकुडवंतथा ४० सिद्धशीतेततोदद्यान्मधुनःकुडवंतथा। जयेदेषोवलेहस्तुसर्वाण्यर्शांसिवेगतः ४१ दुर्नामप्रभवान्रोगानतीसारमरोचकम्। ग्रहणींपाण्डुरोगंचरक्तपित्तंचकामलाम्। अम्लपित्तंतथाशोथंकासंचैवप्रवाहिकाम् ४२ अनुपानेप्रयोक्तव्यमाजंतक्रंपयोदधि। घृतंजलंवाजीर्णेचपथ्यभोजीभवेन्नरः ४३ कुटजत्वक्तुलामार्द्रांद्रोणनीरेविपाचयेत्। पादशेषंशृतंनीत्वा चूर्णान्येतानिदापयेत् ४४ लज्जालुर्धातकीबिल्वंपाठामोचरसस्तथा। मुस्तंप्रतिविषाचैवप्रत्येकंस्यात्पलंपलम् ४५ ततस्तुविपचेद्ग्नौयावद्दर्वीप्रलेपनम्। जलेनच्छागदु

कुरैयाकी छाल तुलाभर एकद्रोण पानीमें पचावै जब चौथाई शेष रहै तब उतारि वस्त्रसे छानलेय॥ ३७॥ फिर तीसपल गुड दे पकावै गाढाभये यह चूर्ण डारै॥ ३८॥ रसौत, मोचरस, त्रिकुटा, त्रिफला, लजालू, चीता, पाढा, बेल, इन्द्रजव, बच॥ ३९॥ भिलावा, अतीस, विडङ्ग और सुगन्धवाला ये पलपल भर घी कुडवभर॥ ४०॥ ठंडापरे कुडवभर शहद दे, यह अवलेह सर्वार्शको वेगही दूर करताहै॥ ४१॥ दुर्नामरोग, अतीसार, अरुचि, ग्रहणी, पाडु, रक्तपित्त, कामला, अम्लपित्त, शोथ, खांसी और प्रवाहिका ये सब दूरहोवैं॥ ४२॥ ( तस्यानुपानम् ) बकरीका दूध वा मट्ठा दही घी इसीका वा पानी भोजन के पचन समय ओषधिखाय॥ ४३॥ (सर्वातिसारपर कुरैयाष्टक) गीलीकुतुलाकुरैयाकी छाल द्रोण भर पानीमें पकावै जब चौथाई शेष रहै तब यह चूर्ण डारै॥ ४४॥ लजालू, धवफूल, बेल, पाढा, मोचरस, नागरमोथा और अतीस ये पलपल भर

पयोवृंहणोवलकृन्मतः २८ युक्त्याकूष्माण्डखण्डञ्चशर्करां क्षिपेत्सुधीः। अर्शसांमूढवातानांमन्दाग्नीनांचयुज्यते २९ हरीतकीशतंभद्रंयवानीमाढकंतथा। पलानिदशमूलस्यविंशतिश्चनियोजयेत् ३० चित्रकःपिप्पलीमूलमपामार्गःशटीतथा। कपिकच्छूःशङ्खपुष्पीभार्ङ्गीचगजपिप्पली ३१ वलापुष्करमूलंचपृथग्द्विपलमात्रया। पचेत्पञ्चाढकेनीरेयवैःस्विन्नैःशृतंनयेत् ३२ तच्चाभयाशतंदद्यात्काथेनास्मिन्विचक्षणः। सर्पिस्तैलाष्टपलकंक्षिपेद्गुडतुलांतथा३३पक्त्वालेहत्वमानीतेसिद्धशीतेपृथक्पृथक्। क्षौद्रञ्चपिप्पलीचूर्णंदद्यात्कुडवमात्रया ३४ हरीतकीद्वयंखादेत्तेनलेहेननित्यशः। क्षयंकासंज्वरंश्वासंहिक्कार्शोरुचिपीनसान् ३५ ग्रहणींनाशयेदेषवलीपलितनाशनः। वलवर्णकरःपुंसामवलेहोरसायनः। विहितोगस्त्यमुनिनासर्वरोगप्रणाशनः ३६ कुटजत्वक्तुलांद्रोणेजलस्यवि-

कूष्माण्ड अवलेह बाल वृद्धको देना छाती पुष्टकरै वीर्य बढावै व बलको करै ॥ २८ ॥ (अर्शपर खंड कूष्माण्डावलेह) जैसे कुम्हड़ा की विधिहै सोई सूरन की भी है पेठा श्रार जमींकन्दकी छोटी कचैं करि दोनोंको एकत्र करि उसी रीतिसे अवलेह बनाय खिलावै तो अर्श, मूढवात और मन्दाग्नि ये सब अच्छेहोयँ ॥२९॥ (क्षयीपर अगस्त्य हरीतकी) बड़ीहड़ें सौ, अजवायन एक आढक, दशमूल बीसपल ॥३०॥ चीता, पीपरामूल, चिरचिरा, कचूर, केवांचाकौड़ाला, भारङ्गी, गजपीपरि ॥३१॥ खरियारा और पुष्करमूल सब द्वै द्वै पल पांच आढक जलमें पचाय गलाय उतारि छानलेय ॥३२॥ तिसमें सौ हड़, तेल, घी, आठ पल, गुड़तुलाभर देकर ॥३३ ॥ पकावै ठंढाकरि शहद व पीपरिका चूर्ण ये सब एकएक कुड़वडारै ॥ ३४॥ इस अवलेह के संग दो हड़ नित्यसेवै तो क्षयी का रोग, कास, ज्वर, श्वास, हिचकी, अर्श, अरुचि, पीनस ॥ ३५ ॥ और ग्रहणी ये रोग नाशहोयँ बलवन्त होवै तन बालकृष्णहों रूपवानहो पुरुषको यह अवलेहरसायनहै यह अगस्त्यमुनिकी कही हरीतकी सब रोगोंको नाश करती है ॥ ३६ ॥ (अथार्शपर कुरैया अवलेह)

पचेत्सुधीः । कषायंपादशेषंचगृह्णीयाद्वस्त्रगालितम् ३७
त्रिंशत्पलंगुडस्यात्रदत्त्वाचविपचेत्पुनः । सान्द्रत्वमाग
तंदृष्ट्वाचूर्णानीमानिदापयेत् ३८ रसाञ्जनंमोचरसंत्रि-
कटुत्रिफलांतथा । लज्जालुञ्चित्रकंपाठांबिल्वमिन्द्रयवंव
चाम् ३९ भल्लातकंप्रतिविषांविडङ्गानिचवालकम् । प्र
त्येकंपलसंमानंघृतस्यकुडवंतथा ४० सिद्धशीतेततोद
द्यान्मधुनःकुडवंतथा । जयेदेषोवलेहस्तुसर्वाण्यर्शांसि
वेगतः ४१ दुर्नामप्रभवान्रोगानतीसारमरोचकम् । ग्रह
णींपाण्डुरोगंचरक्तपित्तंचकामलाम् । अम्लपित्तंतथाशोथं
कासंचैवप्रवाहिकाम् ४२ अनुपानेप्रयोक्तव्यमाजंतक्रंप
योदधि । घृतंजलंवाजीर्णेचपथ्यभोजीभवेन्नरः ४३ कुट
जत्वक्तुलामार्द्रांद्रोणनीरेविपाचयेत् । पादशेषंशृतंनीत्वा
चूर्णान्येतानिदापयेत् ४४ लज्जालुर्धातकीबिल्वंपाठामो
चरसस्तथा । मुस्तंप्रतिविषाचैवप्रत्येकंस्यात्पलंपलम् ४५
ततस्तुविपचेद्यत्नोयावद्दर्वीप्रलेपनम् । जलेनच्छागदु

धेनपीतोमण्डेनवाजयेत् ४६ घोरान्सर्वानतीसारान्नानावर्णान्सवेदनान् । असृग्दरंसमस्तंचसर्वार्शांसिप्रवाहिकाम् ४७ ॥ इति श्रीशार्ङ्गधरेमध्यखण्डेऽवलेहकल्पनाष्टमोऽध्यायः ॥ ८ ॥

कल्काच्चतुर्गुणीकृत्यघृतंवातैलमेवच । चतुर्गुणेद्रवेसाध्यंतस्यमात्रापलोन्मिता १ निक्षिप्यक्काथयेत्तोयंक्काथ्यद्रव्याच्चतुर्गुणम् । पादशिष्टंगृहीत्वाचस्नेहस्तेनैवसाधयेत् २ चतुर्गुणंमृदुद्रव्येकाठिन्येष्टगुणंजलम् । अत्यन्तकठिनेद्रव्येनीरंषोडशिकंमतम् ३ तथा च मध्यमेद्रव्ये दद्यादष्टगुणंपयः । कर्षादितःपलंयावद्दद्यात्षोडशिकंजलं ४ ततस्तुकुडवंयावत्तोयंचाष्टगुणंभवेत् । प्रस्थादितःक्षिपेन्नीरेखारीयावच्चतुर्गुणम् ५ अम्बुक्काथरसैर्यत्रपृथक्स्नेहस्यसाधनम् । कल्कस्यांशंतत्रदद्याच्चतुर्थपष्ठम

ले ॥ ४५ ॥ फिर उसीसे दे वो औटै जबलग करछी में लिपटने लगे तब सिद्ध जानो सो ऊपरी पय वा पानी वा माड के संगविये ॥४६॥ तौ सर्व अतीसारकी घोर वेदना निवृत्तहो व सबभांति रक्तस्राव, सर्वार्श और प्रवाहिकाको दूरकरताहै ४७॥

इति श्रीशार्ङ्गधरसुधाकरेणविरचितेवलेहकल्पनाष्टमोऽध्यायः॥ ८॥

(अथ घृत तेल साधना ) कल्कसों चौगुना घृत वा तेल और काथादि द्रव्यभी चौगुनी देना तिसकीमात्रा एकपलभरहै॥१॥जिस द्रव्यका काथदेनाहो तौ चौगुने जल में औटै जब चौथाईरहै तब उतारिछानिले उसमें घी तेल सिद्धकरै॥ २॥ कोमलद्रव्य में चतुर्गुणा जल कठोर में आठगुणा और अत्यन्त कठोर में सोलहगुणा जल दे ॥ ३ ॥ मध्यमें अटगुणा जलदेवै ( पुनर्विधि ) टकाभरे से चारटका भरताई में सोलहगुणापानीदे काथकरे पलसे कुडवताई अटगुनी प्रस्थ से खारीपर्यंत चौगुनादे ॥४।५॥ और जो केवल कल्क पानी घी व तेलमें सिद्धकरै तो चतुर्थांश कल्कदे सेरभर तेल पावसेर कल्क और जो कल्क पानीके संग घी तेल पकावै तो घृत तेलका षष्ठांश कल्क देना तीनपाव में आधपाव और जब कल्क रसके संग घी वा तेल में पकावै तौ तेलका अष्टमांश कल्क देना

ष्टमम् ६ दुग्धेदध्निरसेतक्रे कल्केदेयोष्टमांशकः । क ल्कस्यसम्यक्पाकार्थंतोयमत्रचतुर्गुणम् ७ द्रव्याणियत्र स्नेहेषुपञ्चादीनिभवन्तिहि । तत्रस्नेहसमान्याहुर्यथा पूर्वंचतुर्गुणम् ८ द्रव्येणकेवलेनैवस्नेहपाकोभवेद्यदि । तत्राम्बुपिष्टः कल्कः स्याज्जलंचात्रचतुर्गुणम् ९ क्वाथेन केवलेनैवपाकोयत्रेरितःक्वचित् । क्वाथ्यद्रव्यस्यकल्कोपि तत्रस्नेहेप्रयुज्यते १० कल्कहीनस्तुयः स्नेहःससाध्यःके वलेद्रवे । पुष्पंकल्कस्तुयत्स्नेहस्तत्रतोयंचतुर्गुणम् । स्ने हात्स्नेहाष्टमांशश्चपुष्पकल्कःप्रयुज्यते ११ वर्त्तिवत्स्ने हकल्कःस्याद्यदाङ्गुल्याविमर्दितः । शब्दहीनोऽग्निनिः क्षिप्तःस्नेहसिद्धोभवेत्तदा १२ यदाफेनोद्गमस्तैलेफेनशा न्तिश्चसर्पिषि। गन्धवर्णरसोत्पत्तिःस्नेहसिद्धिस्तथाभवेत् १३ स्नेहपाकस्त्रिधाप्रोक्तोमृदुर्मध्यःखरस्तथा। ईषत्सरस

सेर में औषधादि घृत तैलका प्रमाण यही है ॥ ६ ॥ दूध, दही, रस और मट्ठा इनमें अष्टमांश कल्क देय और कल्क भलीभांति पकाने के कारण चौगुना जल देना चाहिये ॥ ७ ॥ और जहां कल्क घी तेल क्वाथ पांच पांचों होयँ तहां स्नेहादिक समान देना पानी चौगुना देइ ॥ ८ ॥ जब एकही द्रव्य घृत व तेलमें पकानी होय तौ जल में द्रव्य पीसि गला या कल्ककरि चौगुने पानी में पकावें ॥ ९ ॥ जो केवल काढ़े में कहाहो तहा उसी क्वाथकी द्रव्यका कल्ककरि घृत वा तेलयुक्त वह काढा और चौगुना पानीदे पकाना ॥ १० ॥ जहां कल्क रहित है तो केवल द्रववस्तु में दूध पानी देके पकालेना जब फूलके कल्क में स्नेह सिद्ध कहैंगे तब चौगुना पानी देंगे जब स्नेह से स्नेह सिद्ध कहैंगे तब स्नेहका अष्टमांश दूसरा स्नेहले पुष्प कल्कयुक्त पकालेना ॥ ११ ॥ जब वह स्नेह पाक अंगुरीमें लेके मलसे गोली बनजाय उसे आगपर डारै और जलसे शब्द चिंचिराहट न करे तब सिद्धभया जानो ॥ १२ ॥ तेल फेनउठने से सिद्धजानिये घृत फेन शांतिसे सिद्ध जानिये जब गंध आवै और निर्मल होजाय औरसे उत्पत्तिकरै तब घृत वा तेल सिद्धभया जानिये॥ १३ ॥ स्नेहपाक तीन प्रकारकाहै-मृदु मध्य और

कल्कस्तुस्नेहपाकोमृदुर्भवेत् १४ मध्यपाकश्चसिद्धिश्च कल्केनीरसकोमले । ईषत्कठिनकल्कश्चस्नेहपाकोभवे त्खरः १५ तदूर्ध्वंदग्धपाकःस्याद्दाहकृन्निष्प्रयोजनम् । आमपाकश्चनिर्वीर्योवह्निमान्द्यकरोगुरुः १६ नस्यार्थःस्या न्मृदुःपाकोमध्यमःसर्वकर्मसु । अभ्यङ्गार्थेखरःप्रोक्तोयु ञ्ज्यादेवंयथोचितम् १७ घृततैलगुडादींश्चसाधयेन्नैकवा सरे । प्रकुर्वन्त्युषिताह्येतेविशेषाद्गुणसञ्चयम् १८ पिप्प लीपिप्पलीमूलंचव्यचित्रकनागरैः । ससैन्धवैश्चपलिकैर्घृ तप्रस्थंविपाचयेत् १९ क्षीरंचतुर्गुणंदत्त्वातत्सिद्धंप्लीहनाश नम् । विषमज्वरमन्दाग्निहरंरुचिकरंपरम् २० पिप्पलीपि प्पलीमूलंचित्रकोहस्तिपिप्पली । श्वदंष्ट्रानागरंधान्यंपाठा बिल्वंयवानिकी २१ द्रव्यैश्चपलिकैरेतैश्चतुःषष्टिपलं घृतम् । घृताच्चतुर्गुणंदेयंचाङ्गेरीरससंयुतम् २२ तथाच तुर्गुणंदत्त्वादधिसर्पिर्विपाचयेत् । शनैःशनैर्विपक्तव्यंचा ङ्गेरीघृतमुत्तमम् २३ तद्घृतंकफवातघ्नंग्रहण्यर्शोविकार

नर जो कल्क मोमवत् रहे तौ मृदु जानिये ॥ १४ ॥ जो कल्क निरसहो कुछ को मल रहै तौ मध्य जानिये जो कल्क निरस और कठोर होजाय तौ खरा जानिय ॥ १५ ॥ जो इस प्रमाण से अधिक सो रेतो जानो स्नेह बिगड गया अकार्थ गया जो कचा रहै ता सेवनकरने से मन्दाग्निकरै और भारीहो ॥ १६ ॥ नास लेने को नरम हितहै मध्यम सबै कार्यसाधक है खरा मर्दनको है जहा जैसा चाहै रहा तैसा बनावै ॥ १७ ॥ घृत, तेल और गुड एकदिन न सावै दिनान्तरकै करै तौ अधिक गुणकरै ॥ १८ ॥ ( पिल्हीपर क्षीर षट्पल ) पीपरि, पीपरामूल, चाव, चीता, सोंठि और सेंधौ ये सब पल पलभरले प्रस्थभर घी में पचावै ॥ १९ ॥ दूध चौगुना जल मिदहो तौ यह घी प्लीहाको नाश करता हुआ विषमज्वर व मन्दाग्निको दूरकर रुचिकोकर ( संग्रहणी अतीसारपर चाङ्गेरीघृत ॥ २० ॥ पीपरि, पीपरामूल, चीता, गजपीपरि, गुखुरू सोंठि, धनिया, पाढा बेल और अजवायन ॥ २१ ॥ ये पलपलभर और घी चासठिपल छोटी लुनियाका रस २५६ पलदे ॥ २२ ॥ और २५६

नुत्। हन्त्यानाहंगुदभ्रंशंमूत्रकृच्छ्रंप्रवाहिकाम् २४ मसू
राणांपलशतंनीरद्रोणेविपाचयेत् । पादशेषंशृतंनीत्वा
दत्त्वाबिल्वपलाष्टकम् २५ घृतप्रस्थंपचेत्तेनसर्वातीसार
नाशनम्। ग्रहणींभिन्नविट्कांचनाशयेच्चप्रवाहिकाम् २६
अश्वगन्धापलशतंतदर्द्धंगोक्षुरंमतम् । शतावरीविदारी
चशालिपर्णीबलामृता २७ अश्वत्थस्यचशुङ्गानिपद्मबी
जंपुनर्नवा। काश्मर्य्याश्चफलंचैवमाषबीजंतथैवच २८
पृथग्दशपलान्भागांश्चतुर्द्रोणेम्भसःपचेत्। द्रोणशेषेरसे
तस्मिन्पचेच्चैवघृताढकम् २९ मृद्वीकापद्मकंकुष्ठंपिप्पली
रक्तचन्दनम्। पत्रकंनागपुष्पंचआत्मगुप्ताफलंतथा ३०
नीलोत्पलंसारिवेद्वेजीवनीयगणस्तथा। पृथक्कर्षसमाभा
गाःशर्करायाःपलद्वयम् ३१ रसस्यपौण्ड्रेक्षूणामाढकेकं
समाहरेत्। रक्तपित्तंक्षतंक्षीणंकामलांवातशोणितम् ३२

पल दहीके दे मंद मंद आंच से पचावे इसका नाम चांगेरी घृत है ॥ २३ ॥ इस से वात, कफ, ग्रहणी, अर्श दूरहो पेट फूलना, कांचनिस्सरण, मूत्रकृच्छ्र और प्रवाहिका ये सब नाशहोवें ॥ २४ ॥ ( अतीसारपर मसूरघृत ) सौपल मसूरीको द्रोणभर जलमें क्वाथकरे चौथाई रहै तब उस काढे में आठपल बेलकी गुद्दीदे ॥ २५ ॥ और प्रस्थभर घृतदे पचावे उससे सब अतीसार ग्रहणी और बिथरा मल गिरनो तथा प्रवाहिका ये सब दूरहों ॥ २६ ॥ ( रक्तपित्तपर कामदेव घृत ) असगंध सौपल गुखुरू पचासपल शतावरि बिलाईकंद बनउर्दी बरियारा गुर्च ॥ २७ ॥ पीपरका टिंगुसा, रक्तकमलगट्टा, गदापुरना, खंभारी पुष्प, काले उर्द ॥ २८ ॥ ये दशदश पल चार द्रोण पानी में पचाय चतुर्थांश शेष रहै तब आढकभर घी देकर पचावे ॥ २९ ॥ फिर दाख, पद्माख, पीपर, रक्त चन्दन, पत्रज, नागकेशर, किवांचके बीजकी मींगी ॥ ३० ॥ नीलकमल का फूल, दोनों कमलगट्टा, सरिवन, पिठवन, जीवनीयगण पूर्वोक्त जो न मिलें तो केवल बरियारा देना ये सब द्रव्य कर्ष कर्ष भरलें शक्कर दो पल युक्त करना ॥ ३१ ॥ आढकभर पौंड़ाका रस सब इकट्ठा उसमें पचावै जब घी शेष रहै कफेन

हलीमकंपाण्डुरोगंवर्णभेदंस्वरक्षयम्। मूत्रकृच्छ्रमुरोदाहं पार्श्वशूलंचनाशयेत् ३३ एतत्सर्पिःप्रयोक्तव्यंवह्वन्तःपुरचारिणाम्। स्त्रीणांचैवाप्रजातानांदुर्बलानांचदेहिनाम् ३४ श्रेष्ठंबलकरंवर्ण्यंहृद्यंपुष्टिरसायनम्। ओजस्तेजस्करंहृद्यमायुष्यंप्राणवर्द्धनम् ३५ संवर्द्धयतिशुक्रस्यपुरुषं दुर्बलेन्द्रियम्। सर्वरोगविनिर्मुक्तोपयसिक्तोयथाद्रुमः। कामदेवइतिख्यातंसर्पिरुक्तंमहागुणम् ३६ त्रिफलाद्वेनिशेक्रौन्तीसारिवेद्वेप्रियङ्गुका। शालिपर्णीपृष्ठपर्णीदेवदार्व्येलवालुकम् ३७ नतंविशालादन्तीचदाडिमंनागकेशरम्। नीलोत्पलैलामञ्जिष्ठाविडङ्गंपद्मकुष्ठकम् ३८ जातीपुष्पंचन्दनंचतालीसंबृहतीतथा। एतैःकर्षसमैःकल्केर्जलंदत्त्वाचतुर्गुणम् ३९ घृतप्रस्थंपचेद्धीमानपस्मारेज्वरेक्षये। उन्मादेवातरक्तेचकासेमन्दानलेतथा ४० प्रतिश्या

तब छानिले रक्तपित्त, क्षतक्षीण, कमल, वातरक्त ॥ ३२ ॥ हलीमक, पांडु हरै वर्णभेद, स्वरक्षय, मूत्रकृच्छ्र, उरदाह और पसुरी पीड़ाको दूर करे ॥ ३३ ॥ यह घृत बहु रमणीयको देय, बांझ पुत्रवती हो दुर्बलको दे तो मोटा हो ॥ ३४ ॥ श्रेष्ठ है बल करता है शरीरकी रंगत अच्छीहो हृदयको प्रिय व पुष्टता करताहुआ रसायन होकर बल, तेज, आयु और प्राणोंको बढ़ाताहै ॥ ३५ ॥ वीर्य बढ़ाता है दुर्बलेन्द्रिय पुरुषकी बलीहो सब रोगनाशहो जैसे सींचने से वृक्ष तरुण होजाता वैसेही मनुष्यका शरीर होताहै यह कामदेव घृत बड़ा गुणदायी कहाताहै ॥ ३६ ॥ ( कल्याण घृत अपस्मारपर ) त्रिफला, दोनों हल्दी, रेणुका, सरिवन, पिठवन, मकरा, वनउर्दी, वनमूंग, देवदारु, एलवालू न मिले तो सुगन्धवाला देय ॥ ३७ ॥ तगर, इन्द्रायण, जमालगोटे का बीज, अनार, नागकेशर, नीलकमल, इलायची, मँजीठ, विडंग, पद्माख, कूट ॥ ३८ ॥ मालतीपुष्प, श्वेतचन्दन, तालीसपत्र और बड़ी भटकटैया ये सब कर्ष भर पानी में पीसि कल्क करि चौगुना पानी दे ॥ ३९ ॥ उस पानी में प्रस्थभर और वह कल्क देके पकाय वैद्य देवे इस घी से मिरगी, ज्वर, क्षयी, चित्तभ्रम, वातरक्त, कास, मन्दाग्नि ॥ ४० ॥

येकटीशूलेतृतीयकचतुर्थके॥मूत्रकृच्छ्रेविसर्पेचकण्डूपा
ण्ड्वामयेतथा ४१ विषद्वयेप्रमेहेषु सर्वथैवप्रयुज्यते॥व
न्ध्यानांपुत्रदंभूतयक्षरक्षोहरंस्मृतम् ॥४२॥ अमृताकाथ
कल्काभ्यांसक्षीरंविपचेद्घृतम्॥वातरक्तंजयत्याशुकुष्ठं
जयति दुस्तरम् ४३ सप्तच्छदःप्रतिविषाशम्याकःकटु
रोहिणी। पाठामुस्तमुशीरंच त्रिफलापर्पटस्तथा ४४
पटोलनिम्बमञ्जिष्ठाःपिप्पलीपद्मकंशटी। चन्दनंधन्वया
सश्चविशालाद्वेनिशेतथा ४५ गुडूचीसारिवेद्वेचमूर्वावा
साशतावरी॥त्रायन्तीन्द्रयवायष्टीभूनिम्बाश्चाक्षभागिकाः
४६ घृतंचतुर्गुणंदद्याद्घृतादामलकीरसः। द्विगुणंसर्पि
षश्चात्रजलमष्टगुणंभवेत् ४७ तस्मिन्पाययेत्सर्पिर्वातर
क्तेषुसर्वसु।कुष्ठानिरक्तपित्तंचरक्तार्शांसिचपाण्डुताम् ४८
हृद्रोगगुल्मवीसर्पप्रदरान्गण्डमालिकाम्। क्षुद्ररोगंज्वरं
चैवमहातिक्तमिदंजयेत् ४९ कासीसंद्वेनिशेमुस्तंहरितालं

नाकटपकना, कटिपीड़ा, तिजारी, चातुर्थिक मूत्रकृच्छ्र, विसर्पिका, खजुली पाण्डु ॥ ४१ ॥ दोनों विषमें प्रमेह में और रोग सब अच्छेहों, बांझ पुत्र जने और भूत व राक्षसों की बाधा ये सब दूरहोयँ इसका नाम कल्याणघृतहै ॥ ४२ ॥ ( वातरक्तपर अमृतादिघृत गुर्वेल कल्क गुर्वेल काथ दूधके साथ घृत पचावै इससे वातरक्त और कोढ़ दूरहोताहै ॥ ४३ ॥ ( वातकुष्ठादिपर महा तिक्तादि घृत , छितौनी, अमलतास, अतीस, कुटकी पाढ़ा, नागरमोथा, खस, त्रिफला, पित्तपापड़ा ॥ ४४ ॥ पटोल, नीम, मँजीठ, पिपरी, पद्माख, कचूर, चन्दन, जवासा, इन्द्रायन, दोनों हल्दी ॥ ४५ ॥ गुर्च, सरिवन, पिठवन, मुर्रा, रूसा, शतावरि, त्रायमाण भ ऋद्धि है इन्द्रयव, मुलेठी और चिरायता ये सब कर्ष कर्ष भरले ॥ ४६ ॥ घी चौगुनादे व घीका दूना आंवरेका रसदेकर अठगुणा जलदे ॥ ४७ ॥ यह सिद्ध घी सब वातरक्तके विकारों में व अठारहों कुष्ठों में व रक्तपित्त में व रक्तार्श पाण्डुमें देइ ॥ ४८ ॥ और हृद्रोग, गुल्म, विसर्प, प्रदर, गण्डमाला, क्षुद्ररोग और ज्वरको दूरिकरै इसका महातिक्त नामहै पहिले कहे रोग

मनःशिलाम् । कंपिल्लकंगन्धकंचविडङ्गंगुग्गुलुंतथा ५०
सिक्थकंमरिचंशुण्ठींतुत्थकंगौरसर्षपम् । रसाञ्जनंचसिन्दू
रंश्रीवासंरक्तचन्दनम् ५१ इरिमेदंनिम्बपत्रंकरञ्जंसारिवां
वचाम् । मञ्जिष्ठांमधुकंमांसींशिरीषंलोध्रपद्मकम् ५२ हरी
तकींप्रपुन्नागंचूर्णयेत्कार्षिकान्पृथक् । ततस्तच्चूर्णमालो
ड्यत्रिंशत्पलमितेघृते ५३ स्थापयेत्ताम्रपात्रेचघर्मेसप्त
दिनानिवै । अस्याभ्यङ्गेनकुष्ठानिदद्रूपामाविचर्चिकाः ५४
शूकदोषाविसर्पश्चविस्फोटावातरक्तजाः । शिरःस्फोटाः
पदंशाश्चनाडीदुष्टव्रणानिच ५५ शोथोभगन्दरश्चैवलू
ताःशाम्यन्तिदेहिनाम् । शोधनंरोपणंचैवसुवर्णकरणंघृत
म् ५६ जातीनिम्बपटोलंचद्वेनिशेकटुरोहिणी । मञ्जिष्ठामं
धुकंसिक्थंकरञ्जोशीरसारिवाः ५७ तुत्थंचविपचेत्सम्यक्
कल्कैरेभिर्घृतंबुधः । अस्यलेपात्प्ररोहन्तिसूक्ष्मनाडीव्रणा
अपि । मर्माश्रिताःक्लेदिनश्चगम्भीराःसरुजोव्रणाः ५८
चित्रकःशङ्खिनीपथ्याकम्पिल्लस्त्रिवृतायुगम् । वृद्धदारुश्च

सब अच्छे होयँ ॥ ४९ ॥ ( कुष्ठ, दाह, खाजपर कसीसादि घृत ) कसीस दोनों हल्दी, नागरमोथा, हरताल, मैनशिल, कबीला, गन्धक, विडंग, गुग्गुलु ॥ ५० ॥ मोम, मिर्च, सोंठि, तूतिया, पीत सरसों, रसौत, सिन्दूर, राल, लाल चन्दन ॥ ५१ ॥ खैर, नीमकापत्ता, करंज, सरिवन, वच, मंजीठ, महुआछाल, जटामासी, सिरस, लोध, पद्माख ॥ ५२ ॥ हड़, गदापुरैना इन सबका एक एक कर्ष चूर्णकरै तिसे तीसपल घृतमें सानि ॥ ५३ ॥ ताम्रपात्रमें भरि सातदिन घाममें धरै इस घी के लगाने से कुष्ठ, दाद खाज, विचर्चिका ॥ ५४ ॥ शूकदोष, विसर्प, वातरक्तजनित शीतला, मस्तकघाव, गर्मी, नासूर ॥ ५५ ॥ शोथ, भगन्दर, लूता ( मकड़ी ) ये दूरहों घाव अतिशुद्धहो पुरावै घाव चिह्न न रहै ॥ ५६ ॥ ( घावपर जात्यादिघृत ) चमेली, नीम, परवल, तीनों पत्ती, दोनों हल्दी, कटुकी, मंजीठ मुलेठी मोम, करंज, खस, सरिवन ॥ ५७ ॥ और तूतिया इन सबको समान भागले लुगदी करि घृतमें पकावै इस घीके लगानें से घाव, नासूर, मर्मस्थानका दुःखदायी गम्भीर घाव और पीड़ा

शम्याकोदन्तीचत्रिफलातथा ५९ कोशातकीदेवदालीनी लनीगिरिकर्णिका। शातलापिप्पलीमूलंविडङ्गंकटुकीत था ६० हेमक्षीरीचविपचेत्कल्कैरेभि पिचून्मितैः। घृतंप्र स्थंस्नुपीक्षीरंषट्पलेतुपलद्वये ६१ अर्कक्षीरस्यमतिमांस्त त्सिद्धंगुल्मकुष्ठनुत्। हन्तिशूलमुदावर्तशोथाध्मानंभग न्दरम् ६२ शमयत्युदराण्यष्टौनिपीतंबिन्दुसङ्ख्यया। गो दुग्धेनोष्ट्रदुग्धेनकौलत्थेनशृतेनवा ६३ उष्णोदकेनवापी त्वाबिन्दुवेगैर्विरिच्यते। एतद्बिन्दुघृतंनामनाभिलेपाद्विरे चयेत् ६४ त्रिफलायारसप्रस्थंप्रस्थंवासारसोद्भवम्। भृङ्गराजरसप्रस्थंप्रस्थमाजंपयस्तथा ६५ दत्त्वातत्रघृते प्रस्थंकल्कैःकर्षमितैःपृथक्। त्रिफलापिप्पलीद्राक्षाच न्दनंसैन्धवंबला ६६ काकोलीक्षीरकाकोलीमेदामरिचना गरम्। शर्करापुण्डरीकाब्जकमलंचपुनर्नवा ६७ निशायुग्मं चमधुकंसर्वैरेभिर्विपाचयेत्। नक्तान्ध्यंनकुलान्ध्यंचकण्डू

ये सब दूरहोयँ॥ ५८॥ (उदररोगपर बिन्दु घृत) चीते की छाल, शंखाहूली, हड़, कबीला, दोनो निशोथ, बिधारा, अमलतासका गूदा, जमालगोटा त्रिफला॥ ५९॥ कड़वीतोरई, देवदाली कहे (घंदाल) नीलकी पत्ती, कोयल सेंहुड़की छीमी, पीपरामूल, विडंग, कुटकी॥ ६०॥ और चूक ये सब कर्ष कर्षभरले कल्क करि प्रस्थभर घीमें पचावै छः पल सेंहुड़का दूधडारै॥ ६१॥ और दो पल मदारका दूधडारै वह सिद्ध घी देवे तो गुल्म, कुष्ठ अच्छाहो शूल, उदावर्त, शोथ, पेटफूलना, भगंदर॥ ६२॥ और आठो उदररोग ये दूरहों आठबूंद पानी से वा दूधसे वा ऊंटके दूधसे कुलथी काथसे॥ ६३॥ गरम पानीसे जो बूंद पियेसे दस्तहों यह बिन्दुघृत नाभिमें लेप करनेसे दस्तआतेहैं॥ ६४॥ (नेत्र रोगपर त्रिफला घृत) त्रिफले का रस एकप्रस्थ, रूसेका एक प्रस्थ, भँगरेका एक प्रस्थ, बकरीका दूध एकप्रस्थ॥ ६५॥ एक प्रस्थ घी कर्ष कर्ष और द्रव्य त्रिफला, पीपरि, दाख, चन्दन, सेंधव, बरियारा॥ ६६॥ दोनों काकोली, बिना असगन्ध, मेदा, बिना मुलेठी, मिर्च, सोंठि, खांड़, श्वेतकमल, रक्तकमल, गदापुरना॥ ६७॥ दोनों

पिल्लंतथैवच ६८ नेत्रस्रावंचपटलंतिमिरंकाजकंजयेत्। अन्येपिप्रशमंयान्तिनेत्ररोगाःसुदारुणाः। त्रिफलंघृतमेतद्धिपानेनस्यादिभिर्हितम् ६९ द्वेहरिद्रेस्थिरामूर्वासारिवाचंदनद्वयम्। मधुपर्णीचमधुकंपद्मकेसरपद्मकम् ७० उत्पलोशीरमेदाभिस्त्रिफलापञ्चवल्कलैः। कल्कैःकर्षमितैरेतैर्घृतप्रस्थंविपाचयेत् ७१ विसर्पलूताविस्फोटव्रणकुष्ठविषापहम्। गौर्यादिकमितिख्यातंसर्वव्रणहरंस्मृतम् ७२ बलामधुकरास्नाभिर्दशमूलफलत्रिकैः। पृथग्द्विद्विपलैरेभिर्द्रोणनीरेणपाचयेत् ७३ मयूरपक्षपित्तान्त्रयकृत्पादास्यवर्जितम्। पादशेषंशृतंनीत्वाक्षीरंदत्वाचतत्समम् ७४ घृतप्रस्थंपचेत्सम्यग्जीवनीयैःपिचून्मितैः। तत्स्याद्धिशिरसःपीडांमन्यांपृष्ठग्रहंतथा ७५ अर्दितंकर्णनासाक्षिजिह्वागलरुजोजयेत्। पानेनस्येतथाभ्यङ्गेकर्णपूरेषुयुज्यते। हेमन्तकालेशिशिरेवसन्तेपुचशस्यते ७६ त्रिफलामधुकं

हल्दी और मुलेठी इनका कल्ककरि घी में पकावै तो नक्तान्ध्य, नकुलान्ध्य, काज, पिल्लरोग ॥ ६८ ॥ नेत्रस्राव, पटल, तिमिर और नीलबिन्दु ये सब अच्छे होयँ इस त्रिफलादिघृतको खाय वा नास लेकर यथोचित अनोपान करै ॥६९॥ (घावपर गौर्यादि घृत) दोनों हल्दी, शालिपर्णी, मुरा सारिवा चन्दन, दोनों मुलेठी, कमल केसर, कमल ॥७०॥ नीलकमल, खस, मेदा, त्रिफला, मुलेठी त्रिफला, आम, बढ, पीपर, पाकर और गूलर इनकी छाल सब कर्ष कर्षले कल्क करि प्रस्थभर घी में पचावै ॥ ७१ ॥ यह गौर्यादि घृत विसर्पिका, मागिबासन, शीतला ताव, कुष्ठ और विष इन सबोंको अच्छे करे ॥ ७२ ॥ ( शिरोरोगपर मयूरघृत ) बरियारा, मुलेठी, रासन, दशमूल और त्रिफला ये दो दो पल दे द्रोणभर जलमें पकावै ॥७३॥ मयूरमास बिना आत ओझरी पित्ता पाय पानीमें गलावै चौथाई रहै उतारि ले यह यूष जितना होवे तितना दूध दे ॥७४॥ प्रस्थभर घीमें कर्ष कर्षभर जीवनीयगण और काढा सब पचावे शिरोरोग, मन्याव्यथा, पृष्ठग्रह ॥७५॥ लकवा, कर्ण, नाक, नेत्र, जीभ, गला, इनके रोगनाशै खाय सूंघै मलै कानमे डारै हेमन्त शिशिर वसन्त

ष्टमम् ६. दुग्धेदध्निरसेतक्रे कल्केदेयोष्टमांशकः। क
ल्कस्यसम्यक्पाकार्थंतोयमत्रचतुर्गुणम् ७ द्रव्याणियत्र
स्नेहेषुपञ्चादीनिभवन्तिहि। तत्रस्नेहसमान्याहुर्यथा
पूर्वंचतुर्गुणम् ८ द्रव्येणकेवलेनैवस्नेहपाकोभवेद्यदि।
तत्राम्बुपिष्टः कल्कः स्याज्जलंचात्रचतुर्गुणम् ९ क्वाथेन
केवलेनैवपाकोयत्रेरितःक्वचित्। क्वाथ्यद्रव्यस्यकल्कोपि
तत्रस्नेहेप्रयुज्यते १० कल्कहीनस्तुयः स्नेहःससाध्यःके
वलेद्रवे। पुष्पकल्कस्तुयत्स्नेहस्तत्रतोयंचतुर्गुणम्। स्ने
हात्स्नेहाष्टमांशश्चपुष्पकल्कःप्रयुज्यते ११ वर्त्तिवत्स्ने
हकल्कःस्याद्यदाङ्गुल्याविमर्दितः। शब्दहीनोऽग्निनिः
क्षिप्तःस्नेहसिद्धोभवेत्तदा १२ यदाफेनोद्गमस्तैलेफेनशा
न्तिश्चसर्पिषि। गन्धवर्णरसोत्पत्तिःस्नेहसिद्धिस्तथाभवेत्
१३ स्नेहपाकस्त्रिधाप्रोक्तोमृदुर्मध्यःखरस्तथा। ईषत्सरस

सेर में आधपाव घृत तेलका प्रमाण यही है ॥ ६ ॥ दूध, दही, रस और मट्ठा इनमें अष्टमांश कल्क देय और कल्क भलीभांति पकाने के कारण चौगुना जल देना चाहिये ॥ ७ ॥ और जहां कल्क घी तेल क्वाथ पांच पांचों होयँ तहां स्नेहादिक समान देना पानी चौगुना देइ ॥ ८ ॥ जब एकही द्रव्य घृत व तेलमें पकानी होय तो जलमें द्रव्य पीसि गला या कल्ककरि चौगुने पानी में पचावै ॥ ९ ॥ जो केवल काढे में कहाहो तहां उसी क्वाथकी द्रव्यका कल्ककरि घृत वा तेलयुक्त वह काढा और चौगुना पानीदे पकाना ॥ १० ॥ जहां कल्क रहित है तो केवल द्रववस्तु में दूध पानी देके पकालेना जब फूलके कल्क में स्नेह सिद्ध करैंगे तब चौगुना पानी देंगे जब स्नेह से स्नेह सिद्ध करैंगे तब स्नेहका अष्टमांश दूसरा स्नेहले पुष्प कल्कयुक्त पकालेना ॥ ११ ॥ जब वह स्नेह पाक अंगुरीमें लेके मलसे गोली बनजाय उसे आगपर डारै और जलसे शब्द चिचिराहट न करे तब सिद्धभया जानो ॥ १२ ॥ तेल फेनउठने से सिद्धजानिये घृत फेन शांतिसे सिद्ध जानिये जब गंध आवै और निर्मल होजाय थौरसे उत्पत्तिकरै तब घृत वा तेल सिद्धभया जानिये ॥ १३ ॥ स्नेहपाक तीन प्रकारकाहै–मृदु मध्य और

हलीमकंपाण्डुरोगंवर्णभेदंस्वरक्षयम् । मूत्रकृच्छ्रमुरोदाहं पार्श्वशूलंचनाशयेत् ३३ एतत्सर्पिःप्रयोक्तव्यंवह्वन्तःपुरचारिणाम् । स्त्रीणांचैवाप्रजातानांदुर्बलानांचदेहिनाम् ३४ श्रेष्ठंबलकरंवर्ण्यंहृद्यंपुष्टिरसायनम् । ओजस्तेजस्करंहृद्यमायुष्यंप्राणवर्द्धनम् ३५ संवर्द्धयतिशुक्रस्यपुरुषंदुर्बलेन्द्रियम् । सर्वरोगविनिर्मुक्तोपयस्सिक्तोयथाद्रुमः । कामदेवइतिख्यातंसर्पिरुक्तंमहागुणम् ३६ त्रिफलाद्वेनिशेकौन्तीसारिवेद्वेप्रियङ्गुका। शालिपर्णीपृष्ठपर्णीदेवदार्व्येलवालुकम् ३७ नतंविशालादन्तीचदाडिमंनागकेशरम् नीलोत्पलैलामञ्जिष्ठाविडङ्गंपद्मकुष्ठकम् ३८ जातीपुष्पंचन्दनंचतालीसंबृहतीतथा । एतैःकर्षसमैःकल्कैर्जलंदत्त्वाचतुर्गुणम् ३९ घृतप्रस्थंपचेद्धीमानपस्मारेज्वरेक्षये । उन्मादेवातरक्तेचकासेमन्दानलेतथा ४० प्रतिश्या

तब छातीमें रक्तपित्त, क्षतक्षीण, कमल, वातरक्त ॥ ३२ ॥ हलीमक, पांडुहरे वर्णभेद, स्वरक्षय, मूत्रकृच्छ्र, उरदाह और पसुरी पीडाको दूरकरे ॥ ३३ ॥ यह घृत बहु रमणीयको देय बाँझ पुत्रवती हो दुर्बलको दे तो मोटाहो ॥ ३४ ॥ श्रेष्ठहै बल करताहै शरीरकी रंगत अच्छीहो हृदयको प्रिय व पुष्टता करताहुआ रसायन होकर बल, तेज, आयु और प्राणोंको बढ़ाताहै ॥ ३५ ॥ वीर्य बढाता है दुर्बलेन्द्रिय पुरुषकी बलीहो सब रोगनाशहो जैसे सींचने से वृक्ष तरुण होजाता तैसेही मनुष्यका शरीर होताहै यह कामदेव घृत बड़ा गुणदायी कहाताहै ॥३६ ॥ ( कल्याण घृत अपस्मारपर ) त्रिफला, दोनों हल्दी, रेणुका, सरिवन, पिठवन, मकरा, वनउर्दी, वनमूंग, देवदारु, एलवालू न मिलै तो सुगन्धवाला देय ॥ ३७ ॥ तगर, इन्द्रायण, जमालगोटे का बीज, अनार, नागकेशर, नीलकमल, इलायची, मँजीठ, विडंग, पद्माख, कूट ॥ ३८ ॥ मालतीपुष्प, श्वेतचन्दन, तालीसपत्र और वृद्ध भटकटैया ये सब कर्ष भर पानी में पीसि कल्क करि चौगुना पानी दे ॥ ३९ ॥ उस पानी में प्रस्थभर और वह कल्क देकै पकाय वैधदेवे इस घी से मिरगी, ज्वर, क्षयी, चित्तभ्रम, वातरक्त, कास, मन्दाग्नि ॥ ४० ॥

रः । एतैरससमैस्तद्वत्सूतोमर्द्यस्तुषाम्बुना ८ ततःशंशो
ध्यचक्राभंकृत्वालिप्त्वाचहिङ्गुना । हिस्थालीसम्पुटेकृत्वा
पूरयेल्लवणेनच ९ अथस्थालींततोमुद्रांदद्याद्दृढतरा
म्बुधः । विशोष्याग्निंविधायाधोनिषिञ्चेदम्बुचोपरि १०
ततस्तुकुर्यात्तीव्राग्निं तदधःप्रहरत्रयम् । एवंनिपातये
दूर्ध्वेरसोदोषविवर्जितः । अथार्द्धपिठरीमध्येलग्नोग्राह्यो
रसोत्तमः ११ लोहपात्रेविनिःक्षिप्यघृतमग्नौप्रतापयेत् ।
तप्तेघृतेतत्समानांक्षिपेद्गन्धकजंरजः १२ विद्रुतंगन्धकंज्ञा
त्वादुग्धमध्येविनिःक्षिपेत् । एवंगन्धकशुद्धिःस्यात्सर्वका
र्येषुयोजयेत् १३ मेषीक्षीरेणदरदमम्लवर्गैश्चभावितम् ।
सप्तवारंप्रयत्नेनशुद्धिमायातिनिश्चितम् १४ निम्बूरसैर्नि
म्बपत्ररसैर्वायाममात्रकम् । पिष्ट्वादरदमूर्ध्वंचपातयेत्सूत
युक्तिवत् । ततःशुद्धंरसंतस्मान्नीत्वाकार्येषुयोजयेत् १५ का
लकूटंवत्सनागःशृङ्गकश्चप्रदीपनः । हालाहलोब्रह्मपुत्रो

तुषाम्बुमें सब मिलाय मर्दनकरै ॥ ८ ॥ जब सूतकै गाढाहो तब टिकरी बना हींग लेपकरि फिर एक हांडी नोनभरि तिसके बीचमें पूर्वोक्त टिकिया धरि तिसपर दूजीहाडी के मुँहरगरेदो जिसमें संधि न रहै तब कपडौटी करि आचदेय ऊपर भीजी कपरीराखै उसे सींचतारहै नीचे तीनपहर तक आच सेजरावै जब ठंढीहो तब उपरवाली हाडीमें जो दोपवर्जित रस लपटा उडायके सब काममें युक्तकरै ॥९।१०। ११ ॥ ( गंधकशोधन ) लोहेकी कडाही में घी अतितप्तकरै घीके समान गंधक चूर्ण छोडै जब गलै तब चौगुने दूधमें गरमही नाइकै बुझावै तौ गधक शुद्धहोकर सर्व कार्योंमें योग्य होताहै ॥ १२ । १३ ॥ ( सिंगरफशोधन ) सिंगरफको भेड़के दूध और नींबूके रसमें घोटि सुखावै इसे भावना कहिये ऐसे सात भावना देने से सिंगरफ निश्चय शुद्ध होताहै ॥ १४ ॥ ( सिंगरफसे पारा निकालने की विधि ) नींबूरस वा नींवपत्र रसमें पहरभर सिंगरफ घोटि फिर डमरूयंत्रकरि उतारिलेय "डमरूयंत्र यों कहते हैं" जैसे प्रथम पारा उडायाहै उड़ाय लेने से भी पारा शुद्धहोकर सर्व कार्यकारक होजाताहै ॥ १५ ॥ ( अथ पारेका मुख करनाकहे

हारिद्रःसक्तुकस्तथा । सौराष्ट्रिकइतिप्रोक्ताविषभेदाअ
मीनव १६ अर्कसेहुण्डधत्तूरालाङ्गलीकरवीरकः गुञ्जाहि
फेनमित्येताः सप्तोपविषजातयः १७ एतैर्विमर्दितःसूत
श्छिन्नपक्षः प्रजायते । मुखंचजायतेतस्यधातूंश्चग्रसते
परान् १८ अथवाकटुकक्षारौराजीलवणपञ्चकम् । रसो
नोनवसारश्चशिग्रुश्चैकत्रचूर्णितैः । समांशैःपारदाद्देतै
र्जम्भीरेणरसेनवा ॥ निम्बूतोयैःकाञ्जिकैर्वासोष्णखल्वेवि
मर्दयेत् १९ अहोरात्रत्रयेणस्याद्रसेधातुचरंमुखम् । अथ
वाश्चिन्दुलीकिट्टैःरसोमर्द्यस्त्रिवासरम् । लवणाम्लैर्मुखंत
स्यजायतेधातुघस्मरम् २० अथकच्छपयन्त्रेणगन्धजार
णमुच्यते । मृत्कुण्डेनिक्षिपेन्नीरंतन्मध्येचशरावकम् २१
महत्कुण्डपिधानाभंमध्येमेखलयायुतम् । लिप्त्वाचमेखला
मध्येचूर्णंतत्ररसंक्षिपेत् २२ रसस्योपरिगन्धस्यरजोदद्या

शुधाकर करनाभी कहते हैं ) कालकूट, वच्छनाग, सिंगिया, मैंगिन, हालाहल, ब्रह्मपुत्र, हरदिया, सक्तुक और सौराष्ट्र ये नव विषहैं औ मदार सेहुँड, धतूरा, कलिहारी, कनर, लालघुंघुची, अफीम ये सात उपविषहैं ॥ १६ । १७ ॥ इन सब विषमें मर्दन करने से पारा पक्षहीन होजाताहै समस्त धातुओं के भक्षण करने को समर्थ होताहै ॥ १८ ॥ (अथ दूसरा प्रकार ) त्रिकुटा दोनों खार और राई और पांचोंलोन, लहसुन, नौसादार और सहँजनकी छालये सब समभागलेचूर्ण करै तब पारे के समानने जँभीरीरस वा नीबूरस वा कांजीमें गरमकरि खरलकरै ॥ १९ ॥ तीन दिनरात तक पारा सब धातुओं को खाय और तोल न घटै पारा के मुख होताहै और इन्द्रायण वा चीकटहुंडी में तीनदिन घोटै फिर पांचोंलोन और नींबूके रसमें घोटै तब पारेका मुखखुलै और धातु भक्षणकरे ॥ २० ॥ ( कच्छपयंत्रकरि गंधक फूकनेकी विधि ) एक माटी का कूंडाले तिसमें चार अंगुल पानी भरि एक सहनकी राखि उस सहनकी भेतरे पानी एक अंगुल ॥ २१ ॥ तिसमें पारा और गंधकसमभाग धरिऊपरदूसरीसहनकी ढकि चूनेसे देभोसदनकी पारा सूत निःसंधि हुँडियाकरिउसके ऊपर माटी लगाइबंदकरै फिरसेंकदेना ही कागी।

त्समांशकम्। ततोपरिशरावंचभस्ममुद्रांप्रदापयेत् २३ ततोपरिपुटंदत्त्वाचतुर्भिर्गोमयोपलैः। एवंपुनःपुनर्गन्धंषड्गुणंजारयेद्बुधः ॥ गन्धेजीर्णेभवेत्सूतस्तीक्ष्णाग्निःसर्वकर्मसु २४ धूमसारंरसंतोरींगन्धकंनवसादरम्। यामैकंमर्दयेदम्लैर्भागंकृत्वासमांशकम् २५ काचकुप्यांविनिक्षिप्य तांचमृद्वस्त्रमुद्रया। विलिप्यपरितोवक्त्रंमुद्रांदत्त्वाचशोषयेत् २६ अधःसच्छिद्रपिठरीमध्येकूपींनिवेशयेत्। पिठरींवालुकापूरैर्भृत्वाचाकूपिकागलम् २७ निवेश्यचुल्ल्यां तदधःकुर्याद्वह्निंशनैःशनैः। तस्मादप्यधिकंकिञ्चित्पावकंज्वालयेत्क्रमात् २८ एवंद्वादशभिर्यामैर्म्रियतेसूतकोत्तमः। स्फोटयेत्स्वांगशीतंतमूर्ध्वगंगन्धकंत्यजेत्। अधस्थंम्रियतेसूतंसर्वकार्येषुयोजयेत् २९ अपामार्गस्यबीजानांमूषायुग्मंप्रकल्पयेत्। तत्सम्पुटेन्यसेत्सूतंमलयूदुग्धमिश्रितम् ३० द्रोणपुष्पीप्रसूनानिविडङ्गगिरिमेदकम्। एतच्चूर्णमधोर्ध्वंचदत्त्वामुद्रांप्रकल्पयेत् ३१ तंगोलं

न गिरै तब ऊपर से चार बिनुवां कंडाकी आंचदेवे इसीप्रकार छःवार पारा गंधक समानदे चार कडाकी आच देदकर फूंकै तौ पारा तीक्ष्णाग्निकारी होकर सर्व कार्य योग्य होताहै॥२३।२४॥ (अथ पारदभस्मविधि) धुआंकासार (करछुवां) पारा, फटकरी, गंधक और नौसादर इन सब द्रव्योंको समभागले पहरभर नींबूके रसमें घोटि॥२५॥ फिर आतशी शीशीमें भरि कपडौटीकरि धूपमें सुखावै तब एक नांदले बीच पैंदीमें छेदकर उस छिद्रपर अभ्रकधरि उसपर शीशी स्थितकरि ऊपर बालू भरि चूल्हेमें धरि तरे आगिबारि पहर बारह पहले अतिमंद आंचकरि फिर क्रम क्रम आंच तीव्रकरै तौ पारा न उडै सिद्ध होजाय जब सिराय तब शीशी निकारि फोरै उसमें गंधक ऊपर गले में पारातले पैंदीमें होयगा उस गंधक को फेंक पारा समेटिले यह पारा सर्वकार्य योग्य होजाताहै॥ २६।२९ ॥ (पुनः) चिरचिरा बीज पीसि दोमूषा बनाय पारा कठगूलरके दूधमें घोटि॥ ३०। मूषायें अंदरइसचूर्ण के बीचमें पारारखे गुमापुष्प, विडंग, गेरका चूर्ण ऊपर दूसरा मूसाधरि कपडौटी,

संधयेत्सम्यङ्मृन्मूषासम्पुटेत्सुधीः । मुद्रांदत्त्वाशोषयि
त्वाततोगजपुटेपचेत् । एवमेकपुटेनैवजायतेभस्मसूतकम्
३२ काकोदुम्बरिकादुग्धैरसेकिञ्चिद्विमर्दयेत्। तद्दुग्धघृ
ष्टहिङ्गोश्चमूषायुग्मंप्रकल्पयेत् ३३ धृत्वातत्सम्पुटेसूतं
तत्रमुद्रांप्रदापयेत् । धृत्वातद्गोलकंप्राज्ञोमृन्मूषासम्पुटेधि
के ३४ पचेन्मृदुपुटेनैवसूतकोयातिभस्मताम् । नागवल्ली
रसैर्घृष्टःकर्कोटीकन्दगर्भितः । मृन्मूषासम्पुटेपक्वःसूतोया
त्येवभस्मताम्. ३५ खण्डितंमृगशृङ्गञ्चज्वालामुख्यारसैः
समम् । रुद्ध्वाभाण्डेपचेच्चुल्ल्यांयामयुग्मंततोनयेत् ३६ अ
ष्टांशंत्रिकटुंदद्यान्निष्कमात्रंतुभक्षयेत् । नागवल्लीरसैःसार्द्धं
वातपित्तज्वरापहम् ३७ अयंज्वरांकुशोनाम्नारसःसर्वज्वरा
पहः । पारदंरसकंतालंतुत्थंटङ्कणगन्धके । सर्वमेतत्समंशुद्धं
कारवेल्लरसैर्दिनम् ३८ मर्दयेल्लेपयेत्तेनताम्रपात्रोदरंभिष
क् । अङ्गुल्यर्द्धप्रमाणेनततोरुद्ध्वाचतन्मुखम् ३९ विपचेद्वा

करि माटीलेमकै सुखावै एक गजपुट आंचदे ऐसे पारा एकही आंच में भस्म होजाताहै ॥ ३१ । ३२ ॥ ( पुनः ) कठगूलरके दूधमें पाराघोटि फिर उसी दूधमें हींग पीसि मूसाबनाइ पारा धरि कपड़ौटी करि मांटीके मूसा में धरै पुनः कपड़ौटी करि ॥ ३३ । ३४ ॥ तीस गोइटाकी आंचदे पारा भस्म होताहै ( पुनः ) पान के रसम पारा घोटि बांझखखसा की जड कोलके भरै इसमें मूंदि कपड़ौटी करै माटी लेप सुखाय थोड़ी आंचमें फूंके से पारा भस्म होता है ॥ ३५ ॥ ( अथ ज्वरांकुश ) हरिण के सींग चूर्णकरि बराबर जैतका रसले मांटी के बासनमें धरि मुंह मूंदि दोपहरकी आंच देकर उतारिलेवे ॥ ३६ ॥ फिरआठवां अंश त्रिकुटादे पीसे चाररत्ती ज्वरांकुश पानके रसमें खिलावै तौ वात, पित्त. ज्वर नाशकरै ॥ ३७ ॥ यह ज्वरांकुश नामरस सब ज्वरको हरताहै ( ज्वरारिरस ) पारा, खपरिया हरताल, तूतिया, सुहागा और गंधकये समानशोधि करेलेके रस में एकदिन ॥ ३८ ॥ घोटिके ताम्रपात्रमें आधा अंगुलमोटालेसि पात्रमुखमूंदि ॥ ३९ ॥

लुकायन्त्रेछिप्त्वाधान्यानितन्मुखे।यदास्फुटन्तिधान्यानि तदासिद्धंविनिर्दिशेत् ४० ततोनयेत्स्वाङ्गशीतंताम्रपात्रो दराद्भिषक्।रसंज्वरारिनामानंविचूर्ण्यमरिचैःसमम्४१मा षेकंपर्णखण्डेनभक्षयेन्नाशयेज्ज्वरान्। त्रिदिनैर्विषमंतीव्र मेकद्वित्रिचतुर्थकम् ४२ तालकंतुत्थकंताम्रंरसंगन्धंमन शिलाम्। कर्षंकर्षंप्रयोक्तव्यंमर्दयेत्त्रिफलाम्बुभिः ४३ गोलंन्यसेत्सम्पुटकेपुटंदद्यात्प्रयत्नतः। ततोनीत्वार्कदुग्धे नवज्रीदुग्धेनसप्तधा४४काथेनदन्त्याःश्यामायाभावयेत्स प्तधापुनः।माषमात्रंरसंदेयंपञ्चाशन्मरिचैर्युतम् ४५गुडं गद्यानकंचैवतुलसीदलयुग्मकम्। भक्षयेत्त्रिदिनंभक्त्या शीतारिर्दुर्लभंपरम् ४६ पथ्यंदुग्धौदनंदेयंविषमंशीतपू र्वकम्। दाहपूर्वंहरत्याशु तृतीयकचतुर्थकौ ४७ द्व्याहि कंसनतंचैववैवर्ण्यंचनियच्छति। भागैकःस्याद्रसाच्छुद्धा देलायाःपिप्पलीशिवा ४८ अकारकरभोगन्धःकटुतैलेन

कपड़ौटी करि वालुकायंत्र में धरि यंत्रमुख खुलाराखि आंचदेय जब उस बालू में धानडारे से खीलहोजाय तब जानिये कि रस सिद्ध होगया ॥ ४० ॥ जब स्वभावसे ठंढाहो तब उसे पात्रसे छुड़ायले उस ज्वराङ्कुशके समान मरिच मिलाय पीसलेय एकमाशा पानके टुकड़ेमें धरि खिलावैज्वरको नाशकरै तीनदिन खानेसे अतिकठिनज्वर, अन्तरिया, तिजारी और चातुर्थिकये सब दूरहोयें॥ ४१।४२ ॥ ( शीतज्वारि रस ) हरताल, तूतिया और तांबा भस्म, शोधा पारा, गन्धक शुद्ध और मैनशिलयें सब कर्ष कर्षभर लेकर त्रिफलाके रसमें घोटै॥४३॥ गोला बांधि कपड़ौटी माटी लेस खूब फूंकिमदार और सेंहुँड़केदूधमें सातभावनादे ॥ ४४॥ फिर जमालगोटा की जडके काढ़ेमें फिर निशोथ के काढ़े में सात भावनादे तब एक माशेरस पचास मरिच ॥४५॥छ माशे गुड़ दो तुलसीदल भक्तिपूर्वक तीन दिन खाय शीतारि रस इसका नाम है बहुत दुर्लभ है ॥ ४६॥पथ्य दूधभातदेय जूड़ी,दाह, ज्वर, तिजारी, चातुर्थिक ॥ ४७ ॥ अन्तरिया, नित्यज्वर और ज्वर जनितविकार सब नाश होवें ( अथ ज्वरघ्नी गुटिका ) शुद्ध पारा एकभाग

शोधितः। फलानिचेन्द्रवारुण्याश्चतुर्भागमिताह्यमी ४९ एकत्रमर्दयेच्चूर्णमिन्द्रवारुणिकारसे। माषोन्मितांवटींकृत्वादद्यात्सर्वज्वरेभिषक्। छिन्नारसानुपानेनज्वरघ्नीगुटिकामता ५० शुद्धोबुभुक्षितःसूतोभागद्वयमितोभवेत्।तथा गन्धस्यभागौद्वौकुर्यात्कज्जलिकान्तयोः५१ सूताच्चतुर्गुणेष्वेवपारदेषुविनिक्षिपेत्। भागैकंटङ्कणंदत्त्वागोक्षीरेणविमर्दयेत् ५२ तथाशङ्खस्यखण्डानांभागानष्टौप्रकल्पयेत्। क्षिपेत्सर्वंपुटस्यान्तश्चूर्णलिप्तशरावयोः ५३ गर्तेहस्तोन्मितेधृत्वापाच्यंगजपुटेनच। स्वाङ्गशीतंसमुद्धृत्यपिष्ट्वात्तत्सर्वमेकतः५४षड्गुञ्जासम्मितंचूर्णमेकोनत्रिंशदूषणैः। घृतेनवातजेदद्यान्नवनीतेनपैत्तिके ५५ क्षौद्रेणकफजे दद्यादतीसारेक्षयेतथा। अरुचौग्रहणीरोगेकार्श्येमन्दानलेतथा ५६ कासश्वासेषुगुल्मेषुलोकनाथरसोहितः। तस्योपरिघृतान्नंचभुञ्जीतकवलत्रयम्। भवेत्क्षणेकमुत्तानःशयीतानुपधानके ५७ अनम्लमन्नंसघृतंभुञ्जीतमधुरंद

पलुवा, पीपरि, हड़जंगी ॥४८॥ अकरकरहा, कडुआ तेलका शोधागन्धक और इन्दूरन ये चार चार भाग ॥४९॥ इन्दूरनरस में घोटि मापमात्र गोली बांधि तरुणज्वर में गुर्च रस में वैद्य ज्वरघ्नी गुटिकाको खिलावे ॥५०॥ (लोकनाथ रस) पारा बुभुक्षित और धातुभक्षक दोभाग दोनोंको खरलकरि कजरी करै पारेसे चौगुनी कौड़ीकी भस्म पारे समान सुहागा गायके दूधमें घोटै ॥५१॥५२॥ पारेसे अठगुणी शङ्खकी भस्म शुद्ध सब पीसि दो सरवों के भीतर लेस ॥५३॥ दोनोंको सम्पुटकरि वस्त्र लपेटि माटी लगाय गजपुटमें फूंकदे जब ठण्डाहो तब खुरचके निकारै खरल करै ॥५४॥ फिर छःरत्ती यह रस मिरच सङ्ग खरलकरि वातरोगमें घीमें दे पित्तमें मक्खन साथ दे ॥५५॥ कफरोगमें शहदमें दे अतीसार, छर्दि, अरुचि, ग्रहणी, दुर्बलता, मन्दाग्नि ॥५६॥ कास, श्वास और गुल्म(गोला)इन रोगोंमें शहदयुक्त दे इस लोकनाथ पर प्रथम तीन कौर घी भात खाय फिर क्षण-

धि। प्रायेणजाङ्गलंमांसं प्रदेयंघृतपाचितम् ५८ सदुग्ध भक्तंदद्याज्जातेग्नौसान्ध्यभोजने।सघृतान्मुद्गवटकान्व्य ञ्जनेष्वेवचारयेत् ५९ तिलामलककल्केनस्नापयेत्सर्पिषा थवा। अभ्यञ्जयेत्सर्पिषाचस्नानंकोष्णोदकेनच ६० क चित्तैलंनगृह्णीयान्नबिल्वंकारवेल्लकम्। वार्ताकंशफरींचि ञ्चांत्यजेद्व्यायाममैथुने ६१ मद्यंसन्धानकंहिङ्गुशुण्ठी माषान्मसूरिकान्। कूष्माण्डंराजिकांकोलंकाञ्जिकंचैव वर्जयेत् ६२ त्यजेद्युक्तांनिद्रांचकांस्यपात्रेचभोजनम्। ककारादियुतंसर्वंत्यजेच्छाकफलादिकम् ६३ आह्वयेयंलो कनाथस्तुशुभेनक्षत्रवासरे। पूर्णातिथौसितेपक्षेजातेचन्द्र वलेतथा६४पूजयित्वालोकनाथंकुमारींभोजयेत्ततः। दानं दद्याद्द्विघटिकामध्येग्राह्योरसोत्तमः ६५ रसात्सञ्जाय तेतापस्तदाशर्करयायुतम्।सत्त्वंगुडूच्याग्रह्णीयाद्वंशलोच नयायुतम् ६६ खर्जूरंदाडिमंद्राक्षामिक्षुखण्डानिचारयेत्।

भर विना तकिये बिछौने खाटपर उताना सोवे फिर चाहै जैसे शयनकरै ॥ ५७ ॥ खटाई छोड़ मधुर दही अच्छे घृतके सङ्ग अन्नखाय और अवश्य जङ्गली मृगादिपशु भक्ष्य मास घीमें अच्छीतरह भूँजिखाय ॥ ५८ ॥ और सन्ध्याके समय पका अग्नि चशेष दूधभात भोजन करै और मूँगके मोदक अधिक घृतमें बने भोजन सङ्गखाय ॥ ५९ ॥ *तिल, आँवरा पीसि उबटन लगाय वा घी मर्दनकरि न्हाय उष्णोदक से* कमर ताई न्हाय ॥ ६० ॥ तेल न छुवै बेल, करेला, भाटा, मछरी, अमली, श्रम और स्त्रीभोगको त्यागै ॥ ६१ ॥ मद्य, अचार, हींग, सोंठ, उर्द, मसूर, पेठा, राई, बेर और काञ्जीको तजै ॥ ६२ ॥ ओसमें न सोवै कासेमें न खाय ककारादि आम के फल और सागोंको तजै ॥ ६३ ॥ यह लोकनाथरस शुभनक्षत्र, वार, पूर्णातिथि, शुक्लपक्ष, बलवान् चन्द्रमादेखि ॥ ६४ ॥ लोकनाथ रसको पूजि कुँवारी जिंवाय दानदेय द्विघटिका साधि भक्षण आरम्भकरै ॥ ६५ ॥ इसके खाने पर तप आतीहै तब मिश्री, गुर्चका सत और बंशलोचन इन सबको मिलायकर देवे ॥ ६६ ॥ खजूर, अनार, दाख व ऊखकी गँडेरी दे तो रसताप दूरहो धनियाकी छाल दूरि

अरुचौनिस्तुपंधान्यंघृतभृष्टंसशर्करम् ६७ दद्यात्तथाम्बु
सेधान्यंगुडूचीक्वाथमाहरेत्। उशीरंधान्यकक्वाथं दद्यात्सम
धुशर्करम् ६८ रक्तपित्तेकफेश्वासेकासेचस्वरसंक्षये। अग्नि
भृष्टंजयाचूर्णमधुनानिशिलेहयेत् ६९ निद्रानाशेऽतिसारेच
ग्रहण्यांपावकक्षये। सौवर्चलाभयाकृष्णाचूर्णमुष्णजलैः
पिबेत् ७० शूलेऽजीर्णेतथाकृष्णामधुयुक्ताज्वरेहिता। छर्दौ
रेवातरक्तेश्चर्यांचैवगुदाङ्कुरे ७१ नासिकाश्रुतिरक्तेचरसंदा
डिमपुष्पजम्। दूर्वायाःस्वरसंनस्येप्रदद्याच्छर्करान्वितम्
७२ कोलमज्जाकणाबर्हिपक्षभस्मसशर्करम्। मधुनालेह
येच्छर्दिहिक्काकोपप्रशान्तये ७३ विधिरेषप्रयोज्यस्तुसर्व
स्मिन्पोटलीरसे। मृगाङ्कहेमगर्भमौक्तिकाख्येप्रपञ्चाह्व
स्येवंलोकनाथोक्तोरसःसर्वरुजोजयेत् ७४ मूलंवल्लुस्त्रा
णिहेम्नःसूक्ष्माणिकारयेत्। तुल्यानितानिसूतेनखल्वेक्षि
प्त्वाविमर्दयेत् ७५ काञ्चनाररसेनैवज्वालामुख्यारसेनवा।

करि घीमें भूंजिके चूर्ण करि मिश्री मिलाय खिलावै ॥ ६७ ॥ इसी तरहसे धनियां गुर्चका काढादे, खस व धनियेका काढादे, मधु व मिश्रीको मिलायदे ॥ ६८ ॥ रक्तपित्त, कफ, श्वास, कास और स्वरभंग ये सब अच्छे होयँ भांग भूंजि चूर्ण करि लोकनाथसंयुक्त रातको खिलावै ॥ ६९ ॥ तथा नींदनाश, अतीसार, संग्रहणी व मन्दाग्निमें सोचर, हड़ व पीपरिसाथ रसदेकर गरमपानी पिलावै ॥ ७० ॥ तो शूल व अजीर्ण को दूरिकरै पीपरि शहदयुक्त खाय तो ज्वरको, वातरक्त, छर्दि व बवासीर को दूरिकरै ॥ ७१ ॥ ( नासार्श कारण ) अनाररस में दे दूबरस मिश्री लोकनाथरसयुक्त नासदे ॥ ७२ ॥ बेरमिंगी, पीपरि, मोरपंखकी भस्म, मिश्री, शहदयुक्त खाय तो छर्दि व हिचकी को दूरिकरै ॥ ७३ ॥ ये जो भांति भांति के अनोपान लोकनाथमें कहे सो पोटली के रसमें भी सब उसी रीतिसे देनाचाहिये जैसे मृगांक, हेमगर्भ, मौक्तिकाख्य और पंचामृतादि पोटलिकारस इनसबों में लोकनाथोक्तरीति सदृश करै तो सम्पूर्णरोग अच्छेहों ॥ ७४ ॥ ( मृगांकपोटलीरस क्षयादि पर ) सोनेका पत्र समानभाग सोने के सम पारा मिलायें खरल

लाङ्गल्यावारसैस्ताबद्यावद्बवतिपिण्टिका, ७६ ततोहेम्न श्चतुर्थांशंटङ्कणंतत्रनिःक्षिपेत् । पिष्टंमौक्तिकचूर्णंचहेमं द्विगुणमाहरेत् ७७ तेषुसर्वसमंगन्धंक्षिप्त्वाचैकत्रमर्दये त् । तेषांकृत्वाततोगोलंवासोभिःपरिवेष्टयेत् ७८ पश्चा न्मृदावेष्टयित्वाशोषयित्वाचधारयेत् । शरावसम्पुटस्यान्ते तत्रमुद्रांप्रदापयेत् ७९ लवणापूरितंभाण्डेस्थापयेत्तंचस म्पुटे । मुद्रांदत्त्वाशोषयित्वाबहुभिर्गोमयैःपुटेत् ८० ततः शीतेसमाहृत्यगन्धंसूतसमंक्षिपेत् । घृष्ट्वाचपूर्ववत्खल्वेपु टेद्गजपुटेनच ८१ स्वाङ्गशीतंततोनीत्वागुञ्जायुग्मंप्रयो जयेत् । अष्टभिर्मरिचैर्युक्तःकृष्णात्रयमथापिवा ८२ वि लोक्यदेयादोषादित्तैक्त्वरसरक्तिका । सर्पिषामधुनावापि देयादोषाद्यपेक्षया ८३ लोकनाथसमंपथ्यंकुर्यात्स्वस्थम नाःशुचिः । श्लेष्माणंग्रहणींकासंश्वासंक्षयमरोचकम् । मृगाङ्कोयंरसोहन्यात्कृशत्वंबलहानिताम् ८४ सूतात्पाद

करै ॥ ७५ ॥ कचनार का रस वा अरणीरस वा करिआरस में घोटे जबतक गोला बंधजाय ॥ ७६ ॥ सोने का चौथ्याई सुहागादे और सोनेका दूना मोती का चूनादे ॥ ७७ ॥ इनसबके समान गंधकदे सब खरलकरि गोलाबांधि रूर क- पड़ा लपेटे ॥ ७८ ॥ फिर माटी से लेस सुखाय शरावसंपुट करि ॥ ७९ ॥ लोन पूरित पात्रमें संपुटधरै उसका मुंहसुखाय गजपुट में फूंकदे ॥ ८० ॥ ठंढाभयेपर नि- कारिकै सोने के समान पारा और सोने समान गंधकको युक्तकरि पूर्ववत् रसमें खरलकरि फिर उसीक्रिया से गजपुट में फूंकै ॥ ८१ ॥ जब ठंढाहो तब निकासि दो गुंजा रस आठ मिरच वा तीन पीपरि के संगदे ॥ ८२ ॥ और दोषको विचारि के आपर रत्तीभर घाट वा बाद समझके देइ घी अथवा शहदके साथ दोष वि- चारिकै देनाचाहिये ॥ ८३ ॥ पथ्य लोकनाथसदृश इसमें भी देना योग्य है चित्त एकाग्रकरि अतिपवित्र होकर खावे तौ श्लेष्मा, ग्रहणी, कास, श्वास, क्षयी और अरुचि इन रोगों को यह मृगांकरस दूर करता, व बलहीनको बलवान् करताहुआ,

प्रमाणेनहेमपिष्टिंप्रकल्पयेत् । तयोःस्याद्द्विगुणोगन्धोम
र्दयेत्काञ्चनारिणा ८५ कृत्वागोलंक्षिपेत्मूषासम्पुटेमुद्रये
त्ततः । पचेद्भूधरयन्त्रेणवासरत्रितयंबुधः ८६ ततःउद्धृत्य
तत्सर्वं,दद्याद्गन्धंचतत्समम् । मर्दयेदार्द्रकरसैश्चित्रकस्य
रसेनवा ८७ स्थूलपीतवराटांश्च पूरयेत्तेनयत्नतः ।
एतस्मादौषधात्कुर्यादष्टमांशेनटङ्कणम् ८८ टङ्कणार्द्ध
विषंदत्त्वापिष्ट्वासेहुण्डदुग्धकैः । मुद्रयेत्तेनकल्केनवराटा
नांमुखानिच ८९ भाण्डेचूर्णप्रलिप्याथ धृत्वामुद्रांप्रदाप
येत् । गर्तेहस्तोन्मितेधृत्वापुटेद्गजपुटेनच ९० स्वा
ङ्गशीतंरसंनीत्वाप्रदद्याल्लोकनाथवत् । पथ्यंमृगाङ्कव
द्देयंत्रिदिनंलवणंत्यजेत् ९१ यदाच्छर्दिर्भवेत्तस्यदद्या
च्छिन्नारसंतदा । मधुयुक्तंतदाश्लेष्मकोपेदद्याद्गुडार्द्रक
म् ९२ विरेकेभर्जिताभङ्गाप्रदेयादधिसंयुता । जयेत्कासं
क्षयंश्वासंग्रहणीमरुचिन्तथा ९३ अग्निंचकुरुतेदीप्तं

दुर्बलको मोटा करताहै॥८४॥ ( कफक्षयीपर हेमपोटलीरस )पारा,पारेकी चौथ्याई सोनाले खरलकरै जबै पीठी होजाय तब दोनोंसे दूनी गंधकदे कचनारके रसमें घोटि गोलाकरै ॥ ८५ ॥ सो मूषायंत्र में भरि संपुटकरि कपरलपेट माटी लगाय सुखाय भूधरयंत्रमें फूंकदे भूधरयंत्र एकहाथ गहिरा, लंबा व चौड़ा खोदि तिसमें छोटागढ़ा खोदि औषधरख माटीसे दाबि तिसपर बिनुवांकंडा अलसी करि बड़े गढ़ेमें भरि तीनदिन आंचदे ॥ ८६ ॥ जब स्वभावसे शीतलहो तब निकारि समान गंधकले अद्रक वा चीतेके रसमें घोटि॥ ८७ ॥ बड़ी पीली कौड़ी में भरि औषधका अष्टमांश सुहागा॥ ८८ ॥ सुहागे का आधा सिंगिया दोनों सेंहुड़के दूधमें पीसि कौड़ी का मुख बंदकरि ॥ ८९ ॥ फिर माटीपात्रमें चूनालेसि कौड़ी में भरि दूसरे दिवस बंदकरि मुद्रितकरि गजपुटसे आंचदे ॥ ९० ॥ ठंढाभये निकारि लोकनाथकी रीति से खिलावै व मृगांककी रीति से पथ्यदे तीनदिन लोन वर्जितरहै॥ ९१ ॥ जो छर्दि होय तौ गुर्चका रस दा काथ मधुयुक्तदे कफवृद्धि में गुड़ अद्रकरस युक्तदे ॥ ९२ ॥ अतीसारमें भूनीभांग व हींग दोनोंके संगदे तथा

कफवातंनियच्छति। हेमगर्भःपरोज्ञेयोरसःपोटलिकाभि
धः९४ रसस्यभागाश्चत्वारस्तावन्तःकनकस्यच। तयो
श्चपिष्टिकांकृत्वागन्धोद्वादशभागिकः ९५ कुर्यात्कज्ज
लिकांतेषांमुक्ताभागाश्चषोडश। चतुर्विंशञ्चशङ्खस्य
भागोकंटङ्कणस्यच ९६ एकत्रमर्दयेत्सर्वंपक्वनिम्बुकजैर
सैः। कृत्वातेषांततोगोलंमूषासम्पुटकेन्यसेत् ९७ मुद्रांद
त्त्वाततोहस्तमात्रेगर्तेचगोमयैः। पुटेद्गजपुटेनैवस्वाङ्ग
शीतंसमुद्धरेत्९८ पिष्ट्वागुञ्जाचतुर्मानंदद्याद्व्योषाज्यसंयु
तम्। एकोनत्रिंशदुन्मानमरिचैःसहदीयते९९ राजतेमृन्म
येपात्रेकाचजेवापिलेहयेत्। लोकनाथसमंपथ्यंकुर्यात्तस्य
तमात्तसः१०० कासेश्वासेक्षयेवातेकफेग्रहणिकागदे। अ
तीसारेप्रयोक्तव्यापोटलीहेमगर्भिका १ शुद्धसूतोविषंगन्धं
प्रत्येकंशाणसम्मितम्। धूर्तबीजंत्रिशाणंस्यात्सर्वेभ्योद्वि
गुणोभवेत् २ हेमाभंकारयेदेषांचूर्णंसूक्ष्मंप्रयत्नतः। देयं

कास, क्षयी, श्वास, ग्रहणी व अरुचि इनमें भी देही व भंगके साथदे ॥ ९३ ॥ अग्निदीपन व कफवातनाशन होकर यह हेमपोटलीरस श्रेष्ठ कहाताहै ॥ ९४ ॥ (पुनर्हेमगर्भरस कास पर) पारा चारभाग व सोना चारभाग इन दोनों की पीठीकरि द्वादशभाग गंधकदे ॥ ९५ ॥ व तीनोंको काजलीकरि, सोलहभाग मोती चौबीस भाग शङ्ख व एकभाग सुहागा ॥ ९६ ॥ ये सब एकत्र करि पके नींबूके रस में घोटि गोलाबांधि मूषापुट में धरि मुद्रा साधि ॥ ९७ ॥ सुखाय हाथभर भूमिको खोदि उसमें धराय हाथभर कंडा भराय फूंकिदे जब शीतल होजावे तब निकारि धरे ॥ ९८ ॥ चारिरत्ती रस मिर्च उन्तीस गोघृतमें पीसिदेवे ॥ ९९ ॥ चांदी वा माटी वा कांचके पात्रमें धरि खिलावै और लोकनाथ रस सम पथ्य बतावै ॥ १०० ॥ तो यह कास, श्वास, क्षयी, वात, कफ, ग्रहणी व अतीसारवाले को देय यह हेमगर्भ पोटली इन सब रोगनको हरती है ॥ १ ॥ पारा गंधक विष शोधे चारि चारि मासे धतूराबीज बारहमासे सबका दूना ॥ २ ॥ चोक चोक विना फूट सब सुक्त

जम्बीरमज्जाभिश्चूर्णं गुञ्जाद्वयोन्मितम् ॥ ३ ॥ आर्द्रकस्वर सैर्वापिज्वरं हन्ति त्रिदोषजम्। एकाहिकं द्व्याहिकं वा तृतीयं वा चतुर्थकम्। विषमञ्चज्वरं हन्यात् ख्यातोयं ज्वराङ्कुशः ॥ ४ ॥ दरदं वत्सनाभं च मरिचं टङ्कणं कणाम्। चूर्णयेत्सम भागेन रसो ह्यानन्दभैरवः ॥ ५ ॥ गुञ्जैकं वा द्विगुञ्जं वा बलं ज्ञात्वा प्रयोजयेत्। मधुना लेहयेच्चापि कुटजस्य फलत्वचम्। चूर्णितं कर्षमात्रन्तु त्रिदोषोत्थातिसारजित् ॥ ६ ॥ दध्यन्नं दापयेत्पथ्यं गव्याज्यं तक्रमेव वा। पिपासायां जलं शीतं विजयां च हितां निशि ॥ ७ ॥ विषं पलमितं सूतः शाणिकश्चूर्णये द्द्वयम्। तच्चूर्णं सम्पुटे धृत्वा काचलिप्तशरावयोः ॥ ८ ॥ मुद्रां दत्वा च संशोष्य ततश्चुल्ल्यां निवेशयेत्। वह्निं शनैः शनैः कुर्यात्प्रहरद्वयसङ्ख्यया ॥ ९ ॥ तत उत्पाट्य तन्मुद्रामुपरिस्थशरावकात्। संलग्नो यो भवेद्धूमः संग्रहणीयाच्छनैः शनैः ॥ १० ॥ वायुस्पर्शो यथा न स्यात्ततः कूप्यां निवेशयेत्।

करि सूक्ष्म चूर्णकरि दो गुंजा रस जंभीरी के ॥ ३ ॥ वा अदरकरस में दे त्रिदोष जनित ज्वर नाशकरै नित्य आनेवाला, अंतरिया, तिजरिया, चातुर्थक व विषम ज्वर को यह ज्वरांकुश निश्चय कर नाश करता है ॥ ४ ॥ ( आनन्दभैरवरस अतीसारपर ) शुद्ध सिंगरफ, सिंगिया, मिरच, सुहागा व पीपरि ये सब समानले महीन चूर्णकरिये यह आनन्दभैरवरस ॥ ५ ॥ रोगीका बलदेखि एक गुंजा वा दो गुंजा इन्द्रयव व कुरयाछाल इन दोनों को दशमासे पीसि रसयुक्त शहदमें मिलाय चटावै तौ त्रिदोषजन्य अतीसार दूरहोय ॥ ६ ॥ गऊका दही वा घृत वा मट्ठा पथ्य भातसाथ खाय ठंढा पानी पिलावै और भांग अच्छीतरह धोय बनाय रातको पिलावै ॥ ७ ॥ ( सन्निपातपर लघुसूचिकाभरण ) सिंगिया १ पल पारा ४ मासे दोनों खरलकरि दो परई कांच के लुकसों हुई में धरिके ॥ ८ ॥ मुद्राकरि सुखाय चूल्हेपर चढ़ाय मंदमंद दो पहरकी आंचदेय ॥ ९ ॥ दोनों उदाकरि ऊपर के सरवा में लगा धुआं होले से छीलले ॥ १० ॥ जिस पात्र में पवन न जासकै वा शीशी में धरै सूचीमुखी शीशी करिलेइ "सू-

यावत्सूचीमुखेलग्नंकूप्यांनिर्यातिभेषजम् ११ तावन्मा
त्रोरसोदेयोमूर्च्छितेसन्निपातिनि । क्षुरेणप्रच्छितेमूर्धनितं
तोङ्गुल्याचघर्षयेत् १२रक्तभेषजसम्पर्कान्मूर्च्छितोपिहि
जीवति । तथैवसर्पदष्टस्तुमृतावस्थोपिजीवति । यदाता
पोभवेत्तस्यमधुरंतत्रदीयते १३ सूतभस्मसमंगन्धंगन्धा
द्पादंमनःशिला । माक्षिकंपिप्पलीव्योषंप्रत्येकंशिलया
समम् १४ चूर्णयेद्भावयेत्पित्तैर्मत्स्यमायूरसम्भवैः । सप्त
धाभावयेच्छुष्कंदेयंगुञ्जाद्वयोन्मितम् १५ तालपर्णीरसै
श्चानुपञ्चकोलशृतोपिवा । जलबुन्दोरसोनामसन्निपातं
नियच्छति । जलयोगश्चकर्तव्यस्तेनवीर्यभवेद्रसः १६
शुद्धसूतंविषंगन्धंमरिचंटङ्कणंकणा । मर्दयेद्धूर्तजैर्द्रावैर्दिन
मेकंचशोषयेत् १७पञ्चवक्त्रोरसोनामद्विगुञ्जःसन्निपातहा ।

चीपुल एक सुई समले कहे उसकामुख सुई समानहो उसे सूचीमुख कहते हैं" उससे जितना निकसै ॥ ११ ॥ तितना सन्निपातमूर्च्छितका शिर मुड़ाय पछने देय जो रक्त निकले उसी घावपर उस रसको अँगुरी से मलै ॥ १२ ॥ जो रुधिर व रस में मिलजाय तो मूर्च्छित जागै तैसेही सांपका काटा जागै फिर इसे इस उपचार से तापआवै तब उस रोगी को मधुर अर्थात् गंडेरी, अनार, छुहारा व दाखादि को खिलावै ॥ १३ ॥ ( सन्निपात पर जलबुन्दरस ) पाराभस्म समान गन्धककी चौथ्याई मैनशिल, सोनामाखी, पीपरि, सोंठि, मिर्च सब मैनशिल समान ले ॥ १४ ॥ खरलकरि मछरी के पित्तमें सात भावनादे तैसेही मयूरपित्त में सात भावनादे सुखाय दो गुंजा खवावै ॥ १५ ॥ श्वेत मुसली के रसमें और पंचकोल, सोंठि, मिर्च, पीपरि, चाव व चीता इनके काढ़े में दे यह जलबुन्दरस सन्निपातको दूर करता है जल ठण्ढा पियै व ठण्ढे जल से हाथ मुँह धोवै व जल का स्पर्श राखै तो औषध बल पातीहुई सन्निपात को दूर करती है ॥ १६ ॥ ( सन्निपात पर पंचवक्त्ररस ) ॥ शुद्धपारा, सिंगिया, गन्धक, मिरच, सुहागा, पीपरि व धतूराके रसमें एक दिन मर्दनकरै घाममें सुखावै ॥ १७ ॥

१ जलबद्धोरसोनामेतिपाठान्तरम् ॥

अर्कमूलकषायन्तु सत्र्यूषमनुपाययेत् १८ युक्तं दध्योदनं पथ्यं जलयोगं च कारयेत्। रसेनानेन शाम्यन्ति सन्न्यासोद्रेणकफोद्भवाः १९ मध्वार्द्रकरसं चानुपिबेदग्निविवृद्धये ॥ यथेष्टं घृतमांसाशी शक्तो भवति पावकः २० रसगन्धौ समानांशं धत्तूरफलजै रसैः। मर्द्दयेद्दिनमेकन्तु तत्तुल्यं त्रिकटु क्षिपेत्। उन्मत्ताख्यो रसो नाम्ना नस्येर्यात्सन्निपातजित् २१ निस्त्वग्जेपालबीजं च दशनिष्कं विचूर्णयेत् । मरिचं पिप्पलीं सूतं प्रतिनिष्कं विमिश्रयेत् २२ भाव्यो जम्बीरजैर्द्रावैः सप्ताहं सम्प्रयत्नतः। रसोयमञ्जने दत्तः सन्निपातं विनाशयेत् २३ सूतं टङ्कणकं तुल्यं मरिचं सूततुल्यकम्। गन्धकं पिप्पलीशुण्ठी द्वौ द्वौ भागौ विचूर्णयेत् २४ सर्वतुल्यं क्षिपेद्दन्तीबीजं निस्तुषितं भिषक्। गुञ्जैकं रेचनं सिद्धं नाराचोयं महारसः। । आध्मानं मलविष्टंभमुदावर्त्तं च नाशयेत् २५

यह पंचवक्र रस दो गुंजा सन्निपात में देइ तौ सन्निपात दूर होजाय॥ (मदारमूल क्वाथ) सोंठि, मिरच व पीपरि के सङ्ग दे यही अनुपान है॥ १८॥ पथ्य दही भातदे और जलयोग करे जलमें बैठि ओपरसाप रहन सई देय तौ कफजनित उपद्रव अच्छे होयँ॥ १९॥ अद्रक शहद सड्डेय तौ अग्नि दीपन करै और यथायोग्य घृत, मास खाई तौ अग्नि मैदन करै॥ २०॥ (सन्निपात पर उन्मत्तरस) पारा, गन्धक सम भागले धतूरफलके रससे खरल करि तिसके समान त्रिकुटा दे पीसि इस उन्मत्तरसको नासदेने से सन्निपात दूरहोता है॥ २१॥ (सन्निपात पर अञ्जन) जमालगोटा छीलि छिला दूरकरि चालिस माशे चूर्ण करै मिरच, पीपरि व सोंठि चार चार मासे ले॥ २२॥ जंभीरीरस में सात दिन घोटि अञ्जन करै तौ सन्निपात दूरहोय॥ २३॥ (शूलपर नाराचरस) पारा, सुहागा समभाग करि समान मिरच, गन्धक, पीपरि व सोंठि दो २ भागले खरल करै॥ २४॥ सब के समान शुद्ध जमालगोटा दे एकत्रकरि खरलकरै गुंजाभर देने से रेचन होय यह नाराच नामरस आध्मान, मलविष्टम्भ व उदावर्त्त ये सब रोग नाश करता है॥ २५॥

दरदंटङ्कणंशुण्ठी पिप्पलीचैककार्षिकाः ॥ हेमाह्वापलमात्रास्याद्दन्तीबीजंचतत्समम् २६ विचूर्ण्यैकत्रसर्वाणिगोदुग्धेनैवसाधयेत् । त्रिगुञ्जंरेचनंदद्याद्विष्टम्भाध्मानरोगिषु २७ सूतभस्मत्रिभागंस्याद्भागैकंहेमभस्मकम् । मृततास्यभागैकंशिलागन्धकतालकम् २८ प्रतिभागद्वयंशुद्धमेकीकृत्यविचूर्णयेत् । वराटान्पूरयेत्तेनछागीक्षीरेणटङ्कणम् । पिष्ट्वातेनमुखंरुद्ध्वामृद्भाण्डेसन्निरोधयेत् २९ शुष्कंगजपुटेपक्त्वाचूर्णयेत्स्वाङ्गशीतलम् । रसोराजमृगाङ्कोयंचतुर्गुञ्जःक्षयापहः । दशपिप्पलिकाक्षौद्रैरेकोनत्रिंशदूषणैः ३० शुद्धंसूतंद्विधागन्धंकुर्यात्खल्वेनकज्जलीम् । तयोःसमंतीक्ष्णचूर्णंमर्दयेत्कन्यकाद्रवैः ३१ द्वियामान्तेकृतंगोलंताम्रपात्रेनिधापयेत् । आच्छाद्यैरण्डपत्रेणयामाद्वैत्युष्णतांभवेत् ३२ धान्यराशौन्यसेत्पश्चादहोरात्रात्समुद्धरेत् ।

( शूलपर इच्छाभेदीरस ) शुद्धशिंगरफ, सुहागा, सोंठि व पीपरि कर्ष कर्ष भर, चोक पलभर जमालगोटा पलभर ॥ २६ ॥ सब खरलकरि गोदूध में तीन गुंजा रेचनार्थ देय इस इच्छाभेदी रससे विष्टम्भ व आध्मान दूरहो ॥ २७ ॥ ( क्षयीपर राजमृगांकरस ) पाराभस्म तीन भाग, सोनाभस्म एक भाग ताम्रभस्म एक भाग, मैनशिल, शुद्धगन्धक, हरताल ॥ २८ ॥ दो २ भाग सब घोटि कौडी में भरि, बकरी के दूध में सुहागा पीसि, कौडीका मुख मूँदि माटी पात्रमें धरि सम्पुटकरि ॥ २९ ॥ सुखाय गजपुटमें फूंकदेय जब सिराय तब खरलकरे इस राजमृगांक रसको चारगुंजा देय तो क्षयी क्षयदोषको नाशै दश पीपरि शहद वा उन्तीस मिरच शहद संगदेय ॥ ३० ॥ ( छर्दिपर स्वच्छन्दभैरवरस ) शुद्ध पारेसे दूनी शुद्धगंधक खरलकरि कजलीकरि दोनोंके समान पौलादकी भस्मले सबको घीकुवारके रसमें ॥ ३१ ॥ दो पहरभर घोटि तामन में रख रेंडीपत्तेसे ढापि आधे पहरभर धूपमें धरे उष्णहोय ॥ ३२ ॥ तब नाजकी राशिमें एक दिनरात डारि

१ मृताभ्रंघेतिपाठान्तरम् ॥

संपीड्यगालयेद्वस्त्रेततोवारितरंभवेत् ३३ त्रिकटुत्रिफलैलाभिर्जातीफललवङ्गकैः। नवभागोन्मितैरेतैःसमःपूर्वरसोभवेत् ३४ सञ्चूर्ण्यलोडयेत्क्षौद्रैर्भक्ष्यंनिष्कद्वयंद्वयम्। अयमग्निरसोनाम्नाक्षयकासनिकृन्तनः ३५ सूतार्धगन्धकोमर्द्योयामैकंकन्यकारसैः। द्वयोस्तुल्यंताम्रपत्रंपूर्वकल्केनलेपयेत् ३६ दिनैकंस्थालिकायन्त्रपक्कमादायचूर्णयेत्। सूर्य्यावर्तोरसोह्येषद्विगुञ्जःश्वासजिद्भवेत् ३७ शुद्धंसूतंमृतंलोहंताप्यंगन्धकतालकम्। पथ्याग्निमन्थनिर्गुण्डीत्र्यूषणंटङ्कणंविषम् ३८ तुल्यांशंमर्दयेत्खल्वेदिनंनिर्गुण्डिकाद्रवैः। मुण्डीद्रवैर्दिनैकन्तुद्विगुञ्जंवटकीकृतम् ३९ भक्षयेद्वातरोगार्तोनाम्नास्वच्छन्दभैरवः। रास्नामृतादेवदारुशुण्ठीवातारिजंशृतम्। सगुग्गुलुंपिबेत्कोष्णमनुपानंसुखावहम् ४० दग्ध्वाकपर्दिकान्पिष्ट्वात्र्यूषणंटङ्कणंविषम्।

कै निकारि लेय फिर खरलकरि वस्त्रमें छानिले तब जलपर डारै तौ तिरैगी ॥ ३३ ॥ त्रिकुटा त्रिफला इलायची जायफल लोंग ये सब नवभाग इन सब समान स्वयमग्निरस ले ॥ ३४ ॥ ये सब खरलकरि शहद में दो निष्क खाय यह अग्निरस क्षयी व कास को नाश करता है ॥ ३५ ॥ (श्वासपर सूर्य्यावर्त्तरस) पारा की आधी गन्धक पहरभर घीकुवार के रसमें घोटि दोनों के सम तांबेका पात ले तिसपर लेपकरि यह कजरी ॥ ३६ ॥ एक दिन थालीयंत्र में पकाय ऐंचले थालिकायन्त्र माटीकी हांडीमें लोनभरि तिसपै तांबेका पत्रधरि मुँहमूंदि कपडौटी करि फूंक देय यह सूर्य्यावर्तरस पीसि दो गुंजा खवावै तौ श्वास नाशकरै ॥ ३७ ॥ (स्वच्छन्दभैरवरस) शुद्धपारा, मरालोहा, सोनामासी, गंधक, हरताल, हड, अरणी, मेवडी, त्रिकुटा, भुनासुहागा, सिंगिया, मेवडीरस ॥ ३८ ॥ त्रिकुटा, भुना सुहागा, सिंगिया व मेवडी रसमें सब मिलाय समान खरल करि फिर एक दिन गोरखमुंडीके रसमें खरल करि दो गुंजाके समान गोलीकरै ॥ ३९ ॥ यह स्वच्छन्द भैरवरस वातरोगी को खिलावै तथा रासन, गुर्च, देवदारु, सोंठ व रण्डकीजड़ इनका काढाकरि गुग्गुलयुक्त गरम इसके सङ्ग पिलावै यह अनुपान सुखदायी

गन्धकंशुद्धसूतञ्चतुल्यंजम्बीरजैर्द्रवैः. ४१ मर्दयेद्रक्षये न्माषंमरिचाज्यंलिहेदनु । निहन्तिग्रहणीरोगंपथ्यंतक्रौद नंहितम् ४२ मृतंताम्रमजाक्षीरैःपाच्यंतुल्यैर्गतद्रवैः । त त्ताम्रंशुद्धसूतञ्चगन्धकंचसमंसमम् ४३ निर्गुण्डीस्वर सेर्मर्द्यदिनंतद्गोलकंन्नजेत्।यामैकंवालुकायन्त्रेपाच्यंयोज्यं द्विगुञ्जकम् ४४ बीजपूरकमूलञ्चसजलंचानुपाययेत् । रसस्त्रिविक्रमोनाम्नामासैकेनाश्मरीप्रणुत् ४५ तालंता प्यंशिलांसूतंशुद्धंसैन्धवकङ्कणाम् । समांशंचूर्णयेत्खल्वे सूताद्द्विगुणगन्धकम् ४६ गन्धतुल्यंमृतंताम्रंजम्बीरे दिनपञ्चकम् । मर्द्यंषड्भिःपुटैःपाच्यंभूधरेसम्पुटेपचेत् । पुटेपुटेद्रवैर्मर्द्यंसर्वमेतत्तुषट्पलम् ४७ द्विपलंमारितंताम्रं लोहभस्मचतुष्पलम् । जम्बीराम्लेनतत्सर्वंदिनंमर्द्यंपुटे लघु ४८ त्रिंशदंशंविषंचास्याक्षिप्त्वासर्वंविचूर्णयेत् । म

है ॥ ४० ॥ ( हंसपोटली ग्रहणीपर ) भुनी कौडी पीसि सोंठ, मिर्च, पीपरि, सुहागा, सिंगिया, गन्धक और शुद्धपारा इन सब द्रव्योंको समानले जंभीरी के रसमें ॥ ४१ ॥ खरलकरि माशा एकभर मरिच व घीकेसाथ खाय तब ग्रहणी नाशहोय माठा भात पथ्य देय ॥ ४२ ॥ ( त्रिविक्रमरस अश्मरीपर ) मरा तांबा, बकरी दूध समानले किसी पात्रमें धरि आंचदे दूधतरै उतारिले तब तांबे के समान शुद्धपारा, गन्धक ॥ ४३ ॥ मेवडीके रसमें एक दिन घोटि गोलीकरि मूसायन्त्र में भरि बालुकायन्त्र में आंचदे तब दो गुंजा खिलावै ॥ ४४ ॥ बिजौरा की जडके रसमें वा काढेमें यह रसदेय इस रसका त्रिविक्रम नामहै माशेभर सेवन करै तो पथरीको दूर करता है ॥ ४५ ॥ (कुष्ठपर महातालेश्वर रस ) हर- ताल, सोनामाखी, मैनशिल, पारा, सैंधव व सुहागा ये सब समान खरलकरि पारे से दूनी गन्धकदे ॥ ४६ ॥ गन्धकके तुल्य मरा तांबा जंभीरी के रसमें पांच दिन घोटि शरावसम्पुट में धरि कपडौटी करि भूधरयन्त्र में फूंकदे ऐसे छःबार फूंकदे फिर निकारि बिजौरामें पांच दिन घोटै पूर्ववत् आंचदे तब छःपल रसले ॥ ४७ ॥ मरा तांबा दोपल व लोह मरा चारपल ये दोनों जंभीरी रसमें एक दिन

हिषाज्येनसम्मिश्रंनिष्कार्द्धंभक्षयेत्सदा ४९ मध्वाज्यैर्बा
कुचीचूर्णंकर्षमात्रंलिहेदनु । सर्वकुष्ठंनिहन्त्याशुमहाता
लेश्वरोरसः ५० सूतभस्मसमोगन्धो मृतायस्ताम्रगुग्गु
लू। त्रिफलाचमहानिम्बश्चित्रकश्चशिलाजतु ५१ इत्ये
तच्चूर्णितंकुर्यात्प्रत्येकंशाणषोडश। चतुष्षष्टिकरञ्जस्य
बीजचूर्णंप्रकल्पयेत् ५२ चतुष्षष्टिमृतंचाभ्रंमध्वाज्याभ्यां
विलोडयेत्। स्निग्धभाण्डेघृतंखादेद् द्विनिष्कंसर्वकुष्ठनु
त्। रसःकुष्ठकुठारोयं गलत्कुष्ठनिवारणः ५३ शुद्धंसूतं
द्विधागन्धंमर्द्यंकन्याद्रवैर्दिनम्। तद्गोलंपिठरीमध्येताम्र
पात्रेणरोधयेत्। सूतकाद्द्विगुणेनैवशुद्धेनाधोमुखेनच ५४ पा
र्श्वेभस्मनिधायाथपात्रोर्ध्वंगोमयंजलम्। किञ्चित्किञ्चि
त्प्रदातव्यंचुल्ल्यांयामद्वयंपचेत्। चण्डाग्निनातदुद्धृत्य
स्वाङ्गशीतंसमुद्धरेत् ५५ काष्ठादुम्बरिकावह्नित्रिफलारा

घोटि दश गोइटा में आचदे ॥ ४८॥ इस भस्मका तीसवा अंश सिंगियादे रारल करै तब दोमाशे भसके घीमें नित्य खाय ॥ ४६ ॥ इसके पीछे बकुचीका चूर्ण दश माशे शहदयुक्त घीके साथ खाय तौ सब कुष्ठ नाशहोवैं इसका नाम महातालेश्वर है॥ ५० ॥ ( कुष्ठकुठाररस ) पारा भस्म, गन्धक, मरालोहा, ताम्र गुग्गुल, त्रिफला, बकायन, चीता और शुद्धशिलाजीत ॥ ५१ ॥ ये द्रव्य सोलहशाण चौंसठि शाण करंज बीजका चूर्ण ॥ ५२ ॥ अभ्रक भस्म ६४ शाण सब इकट्ठी करि शहद और घीमें मिलाय समान घृत भाडमें भरि धरि इसे ओंठमाशे खिलावै तौ सब कुष्ठ दूरकरै यह कुष्ठकुठार रस गलित कोढ भी नाशकरता है ॥ ५३ ॥ ( उदयादित्यरस ) शुद्ध पारा व दूनी गन्धक एक दिन घीकुवार के रसमें मर्दन करि गोली बांधि माटीके पात्रमें धरि पारेसे तिगुणा तांबेकी गहरी कटोरी बनाय उस माटीपात्र के भीतर गोलेपर ढांपि किसी वस्तु से निःसंधिकरि बंद करि ॥ ५४ ॥ चारों ओर ढकने के रासभरि चूल्हे पर धरि दोपहर आचदेय और उस तांबेके ढकनेपर पानीमें गोबर घोलि थोडा थोडा छोडता जाय अन्त में तीव्र आचदेय ठंढा भये उतारि ॥ ५५ ॥ कठगूलर, चीता, त्रिफला, अम॰

जयन्तकम् । विडङ्गबाकुचीबीजं क्वाथयेत्तेनभावयेत् ५६ दिनैकमुदयादित्योरसोदेयोद्विगुञ्जकः । विचर्चिकांदद्रुकुष्ठं श्वेतकुष्ठञ्चनाशयेत् ५७ अनुपानंप्रकुर्वीतबाकुचीफलचूर्णकम् । खादिरस्यकषायेणसमेनपरिपाचितम् ५८ त्रिशाणंवागवांक्षीरैःक्वाथैर्वात्रिफलोद्भवैः । त्रिदिनान्तेभवेत्स्फोटःसप्ताहाद्वाकिलासके ५९ नीलंगुञ्जांचकासीसंधत्तूरंहंसपादिकम् । सूर्यभक्तांचचाङ्गेरींपिष्ट्वातुल्यांविलेपयेत् ६० स्फोटस्थानप्रशान्त्यर्थंसप्तरात्रंपुनःपुनः । श्वेतकुष्ठंनिहन्त्याशुसाध्यासाध्यंनसंशयः ६१ अपरंश्वित्रलेपोपिकथ्यतेऽत्रभिषग्वरैः । गुञ्जाफलाग्निचूर्णंचलेपितंश्वेतकुष्ठनुत् । शिलापामार्गभस्मानिलिप्तंश्वित्रंविनाशयेत् ६२ शुद्धसूतंचतुर्गन्धंपलंयामंविचूर्णयेत् । मृतताम्राभ्रलोहानांदरदंचपलंपलम् ६३ सुवर्णरजतंचैवप्रत्येकंद

लतासपत्र, विडंग व बकुची बीज इनका क्वाथकरि रसकी भावनादे ॥ ५६ ॥ एक दिन घोटि यह उदयादित्य रस दो गुंजा खिलाने से विचर्चिका, दाद व श्वेतकुष्ठ अच्छा होजाय ॥ ५७ ॥ अनुपान खदिरसार क्वाथ वा गऊका दूध वा त्रिफले के क्वाथमें तीन शाण बकुची चूर्ण दो गुंजा रसयुक्त खाय तौ तीन दिनके अन्तमें स्फोट कुष्ठ दूरहो सात दिनके अन्तमें सफ़ेद कुष्ठ दूरहो ॥ ५८ ॥ ५९ ॥ (श्वित्रपर लेप) नीलपत्र, गुंजा, कसीस, धतूरा, हंसपद, सूर्यमुखी और छोटी लुनियां ये सब सम भाग लेप करने से ॥ ६० ॥ जहां फूटाहो तहां तौ सात दिन में गलितकुष्ठ अच्छा होय और श्वेतकुष्ठ साध्य वा असाध्य दूर होय ॥ ६१ ॥ इसीपर श्रेष्ठ वैद्य और लेप कहते हैं घुंघुची व चीताको जल में पीसि लगाने से श्वेतकुष्ठ दूरहोय मैनशिल चिरचिरा राख पीसि पानी के साथ लेपकरै तौ श्वेतकुष्ठ दूरहोय ॥ ६२ ॥ (कुष्ठपर, सर्वेश्वर रस) शुद्ध पारा एकपल, गन्धक चारपल एकपहर खरल कर मराताम्बा, अभ्रक, लोह, शिंगरफ ये शुद्ध सब एक एक पल ॥ ६३ ॥ मरासोना व चांदी एकपल मारे

शनिष्ककम्। माषैकंमृतवज्रञ्चतालंशुद्धपलद्वयम् ६४
जम्बीरोन्मत्तवासाभिःस्नुह्यर्कविषमुष्टिभिः। मर्दयेद्धयारिजैः,
द्रवैःप्रत्येकेनदिनंदिनम् ६५ एवंसप्तदिनंमर्द्यतद्गोलंवस्त्र;
वेष्टितम्।वालुकायन्त्रगंस्वेद्यंत्रिदिनंलघुवह्निना ६६ आ
दायचूर्णयेच्छ्लक्ष्णंपलैकंयोजयेद्विषम्। द्विपलंपिप्पली
चूर्णंमिश्रंसर्वेश्वरोरसः ६७ द्विगुञ्जोलिह्यतेक्षौद्रैःसुप्तिमं
डलकुष्ठजित्।वाकुचीदेवकाष्ठंचकर्षमात्रंसुचूर्णयेत्। लि
हेदेरण्डतैलाक्तमनुपानंसुखावहम् ६८ हेमाह्वांपञ्चपलि
कांक्षिप्त्वातक्रघटेपचेत् तक्रेजीर्णेसमुद्धृत्यपुनःक्षीरेघटे
पचेत्।क्षीरेजीर्णेसमुद्धृत्यक्षालयित्वाविशोषयेत् ६९ त
च्चूर्णंपञ्चपलिकंमरिचानांपलद्वयम्।पलैकंमूर्छितंसूतम
कीकृत्वानुभक्षयेत्।निष्कैकंसुतकुष्ठार्तःस्वर्णक्षीरीरसाह्व
यम् ७०,भस्मसूतंमृतंकान्तंमुण्डभस्मशिलाजतु।शुद्धंता
प्यंशिलाव्योषंत्रिफलांकोलबीजकम् ७१ कपित्थंरजनी

चूर्णंभृङ्गराजेनभावयेत् । विंशद्वारंविशोष्याथमधुयुक्तंलिहेत्सदा ७२ निष्कमात्रेंहरेन्मेहान्मेहबद्धरसोमहान् । महानिम्बस्यबीजानि पिष्ट्वाषट्सम्मितानिच ७३ पलंतण्डुलतोयेनघृतनिष्कद्वयेनच । एकीकृत्यपिबेच्चानुहन्तिमेहंचिरन्तनम् ७४ चतुःसूतस्यगन्धोष्टौरजनीत्रिफलाशिवा । प्रत्येकंचद्विभागंस्यात्त्रिव्रज्जैपालचित्रकम् ७५ प्रत्येकंचत्रिभागंस्यात्त्र्यूषंदन्तीचजीरकम् । प्रत्येकमष्टभागंस्यादेकीकृत्यविचूर्णयेत् ७६ जयन्तीस्नुक्पयोभृङ्गवह्निवातारितैलकैः । प्रत्येकेनक्रमाद्भाव्यंसप्तवारंपृथक्पृथक् ७७ महावह्निरसोनामनिष्कमुष्णजलैःपिबेत् । विरेचनंभवेत्तेनतक्रभक्तंससैन्धवम् ७८ दिनान्तेदापयेत्पथ्यंवर्जयेच्छीतलंजलम् । सर्वोदरहरःप्रोक्तोमूढवातहरःपरः ७९ गन्धकंतालकंताप्यंमृतताम्रंमनःशिला । शुद्धंसूतंचतुल्यांशंमर्दयेद्भानयेद्दिनम् । पिप्पल्यास्तुकषायेणवज्री

त्रिफला, झरबेरीकी गुदी ॥७१॥ कँथा और हल्दी इन सबका चूर्ण भँगरेके रसमें घोटै जब सूखजाय तब शहद मिलाय चाटै ॥ ७२ ॥ ४ माशे नित्यखाय तो प्रमेह नाशहोय इस रस को मेहबद्ध नाम कहते हैं बकायन के बिया छः पीसि लेय ॥ ७३ ॥ चारि पैसाभर चावल का धोवन आठमाशे घी सब मिलायकै पियै तो बहुत दिनों प्रमेह दूर होताहै ॥ ७४ ॥ ( जलोदर पर वह्निरस ) पारा पल चार, गन्धक पल आठ, हल्दी, त्रिफला व हड ये सब दो २ पल, निशोथ, जेपाल और चीता ॥ ७५ ॥ ये सब तीन २ पल, त्रिकुटा, जमालगोटे की जड़ और श्वेत जीरा आठ २ पल सब मिलाय खरलकरै ॥ ७६ ॥ अरणी का रस सहुड़दूध भँगरा चीतारस वा कादा रेंड़ीका तेल इनमें क्रमसे सातसात भावनादे ॥ ७७ ॥ यह महावह्निरस चार माशे मुँहमें धरि गरमपानी से उतारि जाय तब मल गिरै सन्ध्याको रेचन के पीछे पथ्य मट्ठा भात सैंधवलोन देकर गरम जल पियै सब पेटके रोग दूरहोयँ व मूढवात दूरहो ॥ ७८ ॥ ७९ ॥ ( गुल्मपर विद्याधररस ) शुद्ध गन्धक, हरताल, सोनामाखी, मरातावा,

क्षीरेणभावयेत् ; ८० निष्कार्द्धंभक्षयेत्क्षौद्रैर्गुल्मंप्लीहादिकं जयेत् । रसोविद्याधरोनामगोमूत्रंचपिबेदनु ८१ टङ्कणं हारिणंशृङ्गंस्वर्णंशुल्वंमृतंरसम् । दिनैकमार्द्रकद्रावैर्मर्द्यंरुद्ध्वापुटेपचेत् ८२ त्रिनेत्राख्योरसःसोयंमाषंमध्वाज्यकैर्लिहेत् । सैन्धवंजीरकंहिङ्गुमध्वाज्याभ्यांलिहेदनु । पक्तिशूलं हरत्याशुमासमात्रंनसंशयः ८३ शुद्धंसूतंद्विधागन्धंयामैकंमर्द्दयेद्दृढम् । द्वयोस्तुल्यंशुद्धताम्रंसम्पुटेतंनिरोधयेत् ८४ ऊर्ध्वाधोलवणंदत्त्वामृद्भाण्डेधारयेद्भिषक् । ततोगजपुटेपक्त्वास्वाङ्गशीतंसमुद्धरेत् ८५ सम्पुटंचूर्णयेत्सूक्ष्मं पर्णखण्डेद्विगुञ्जकम् । भक्षयेत्सर्वशूलार्त्तोहिङ्गुशुण्ठीसजीरकम् ८६ वचामरिचजंचूर्णंकर्षमुष्णजलैःपिबेत् । असाध्यं नाशयेच्छूलंरसोयंगजकेशरी ८७ शुद्धसूतंविषंगन्धमजमोदांफलत्रयम् । सर्जक्षारंयवक्षारंवह्निसैन्धवजीरकौ ८८

मैनशिल और पारा सब समानले खरलकरि फिर पीपरि काथमें दिनभर खरल करै एक दिन सेंहुड दूध में खरल करै ॥ ८० ॥ दो मासे शहद संग चाटै तौ गुल्म व प्लीहा दूरहोय यह विद्याधर रस खाय ऊपर से गोमूत्र पियै ॥ ८१ ॥ ( त्रिनेत्ररस पक्तिशूलपर ) सुहागा, हरिणशृंग, सोना, तांबा और पारामरा एक दिन अदरकके रसमें घोटि गजपुटमें फूंकदे ॥ ८२ ॥ यह त्रिनेत्ररस माशा भर घृत शहद में चाटै तिसपर सैंधव, जीरा, हींग, घृत और शहद चाटै यों मास भर चाटनेसे पसुरी की समस्त पीडा दूरहोय ॥ ८३ ॥ ( शूलपर गजकेशरी रस ) शुद्धपारा व दूना शुद्ध गन्धक दोनों बलपूर्वक घोटि, तिसके समान शुद्ध तानेके कुटके करि कजली में मिलाय सम्पुटकरै ॥ ८४ ॥ फिर माटी के पात्रमें नोन बीचमें सम्पुटगाडि गजपुट आंचदे ठंढाभये निकाले ॥ ८५ ॥ तब खरल करि पानमें दो गुंजारस खवावै तौ पेटका शूल मिटै और ऊपरसे भुनीहींग, सोंठ, जीरा ॥ ८६ ॥ बच और मरिच इनका चूर्ण उष्णोदकके साथ पियै तौ असाध्य शूल भी नाश होजाय यह गजकेशरी रस कहाता है ॥ ८७ ॥ ( मन्दाग्नि पर अग्नितुण्डीरस ) शुद्ध पारा, विष, गन्धक, अजमोद, त्रिफला, सज्जी

सौवर्चलंविडङ्गानिसामुद्रंत्र्यूषणंसमम्। विषमुष्टिंसर्व्व तुल्यंजम्बीराम्लेनमर्दयेत्। मरिचाभांवटींखादेद्वह्निमान्द्य प्रशान्तये ८९शुद्धसूतंविषंगन्धंसमंसर्वंविचूर्णयेत्। मरिच्चंसर्वतुल्यांशं कण्टकार्य्याःफलद्रवैः। मर्दयेद्भावयेत्स र्वमेकविंशतिवारकम् ९० चटींगुञ्जात्रयंखादेत्सर्वाजीर्णप्र शान्तये। अजीर्णकण्टकश्चायंरसोहन्तिविसूचिकाम् ९१ मृतंसूतंमृतंताम्रंहिङ्गुपुष्करमूलकम्। सैन्धवंगन्धकंतालंक टुकींचूर्णयेत्समम् ९२ पुनर्नवादेवदालीनिर्गुण्डीतन्दुली यकैः। तिक्तकोशातकीद्रावैर्दिनैकंमर्दयेद्दृढम् ९३ माषमा त्रंलिहेत्क्षौद्रैरसंमन्थानभैरवम्। कफरोगप्रशान्त्यर्थंछिन्ना क्वाथंपिबेदनु ९४ सूतहाटकवज्राणिताम्रंलोहंचमाक्षिकम्। तालंनीलाञ्जनंतुत्थमहिफेनंसमांशकम् ९५ पञ्चानांलवणा नांचभागमेकंविमर्दयेत्। वज्रीक्षीरैर्दिनैकंतुरुद्ध्वातंभूधरे

जवाखार, चीता, सैंधव, जीरा ॥ ८८ ॥ कालानोन, विडङ्ग, पागालोन और त्रिकुटा ये सब समान भागले और सबके समान कुचलाले जंभीरीके रसमें घोटि मरिच सम गोली बांधि खाय इस अग्निमुख रससे मन्दाग्नि दूर होजाती है ॥ ८९ ॥ ( विसूचिका ( हैजा ) पर अजीर्णकंटकरस ) पारा, सिंगिया और गन्धक ये तीनों शुद्ध सबसम भागले खरल करि सबके समान मरिचदे भटकटैया फलके रसमें भिजोय इकीसबार घोटि ॥ ९० ॥ तीनरत्ती भर वटी बनाय कर खावे तो इस अजीर्णकण्टकवटी के खाने से सब अजीर्ण शान्त होंय और विसूचिका को हने ॥ ९१ ॥ ( अथ मन्थानभैरव ) मृतक पारा व तांबा, हींग, पुष्करमूल, सैंधव, शुद्ध गन्धक, हरताल और कुटकी ये सब सम भाग खरल करि ॥ ९२ ॥ गदापुरैना, देवदाल, मेवड़ी, चौराई और कडुवीतोरई इन सबके रसमें एक एक दिन बलपूर्वक क्रमसे घोटि ॥ ९३ ॥ माशाभर शहद युक्त नित्य खाय यह मंथानभैरवरस कहाता है इसपर कफरोगनाशार्थ गुर्चे का क्वाथ पिये ॥ ९४ ॥ ( अथ वातनाशकरस ) शुद्धपारा, शुद्धसोना, शुद्धहीरा, शुद्धलोह, शुद्धसोनामाखी, शुद्धरताल, शुद्धसुरमा, शुद्धतूतिया और अफीम ये

पचेत् ९६ माषैकमार्द्रकद्रावैर्लेहयेद्वातनाशनम्। पिप्प
लीमूलजंक्वाथंसकृष्णमनुपाययेत्। सर्वान्वातविकारांस्तु
निहन्त्याक्षेपकादिकान् ९७ कनकस्याष्टभागाःस्यु सूतो
द्वादशभिर्मतः। गन्धोपिद्वादशप्रोक्तस्ताम्रंशाणद्वयोन्मि
तम् ९८ अभ्रकस्यचतुःशाणंमाक्षिकस्यद्विशाणिकम्।
वङ्गोद्विशाणःसौवीरंत्रिशाणंलोहमष्टकम् ९९ विषंत्रिशा
णिकंचैवलाङ्गलीपलसम्मिता। मर्दयेद्दिनमेकञ्चरसैरम्ल
फलोद्भवैः २०० दद्यान्मृदुपुटंवह्नौततश्चूर्णंतुकारयेत्।
माषमात्रोरसोदेयः सन्निपातेसुदारुणे १ आर्द्रकस्वरसे
नैवरसोनस्यरसेनवा। किलासंसर्वकुष्ठानिविसर्पंचभगन्द
रम्। ज्वरंगरमजीर्णंचहरेद्रोगहरोरसः २ रसोगन्धस्त्रि
त्रिकर्षौकुर्य्यात्कज्जलिकांद्वयोः। ताराभ्रताम्रवङ्गाहि
साराश्चैकैककार्षिकाः ३ शिग्रुज्वालामुखीशुण्ठीबिल्वेभ्य

समानभाग ॥ ९५ ॥ एक भागमें पांचोंलोन ये सब द्रव्यले एकदिन सेहुंड़के दूध में खरलकरै संपुट में राखि भूधरयंत्रमें पचावै ॥ ९६ ॥ माशेभर रस अदरकके रसमें मिश्रितकरि खावै तौ सब वायु नाश होयँ अथवा पिपरामूल क्वाथ में पीपरि मिलायके देय तौ सब वात विकार आक्षेपकादि निलाय जायँ॥९७॥(सन्निपात पर कनकसुन्दर रस ) आठभाग सोनाभस्म, बारहभाग पाराभस्म, शुद्धगन्धक बारहभाग, दोशाण ताम्रभस्म॥ ९८ ॥ अभ्रकभस्म ४ शाण, सोनामाखी भस्म २ बङ्ग २ सुरमाभस्म ३ लोहाभस्म ८ ॥ ९९ ॥ विष ३ पल, करियारी पलभर ये द्रव्य और रस एक दिन जम्बीरी नींबू में खरलकरै ॥ २०० ॥ संपुटकरि थोडी आंचदै फूंकि फिर खरलकरै माशाभर खिलावै तौ अत्यन्त कठा हुआ सन्निपात दूरहोय ॥ १ ॥ अदरक वा लहसुन के रसमें खिलावै तौ किलास, सर्वकुष्ठ, विसर्प, भगंदर,ज्वर, विषविकार और अजीर्ण इन रोगों को यह कनकसुन्दर रस हरताहै॥ २॥ ( सन्निपात पर भैरवरस ) पारा ३-कर्ष व गन्धक ३ कर्ष इनदोनोंको घोटि कजलीकरि तारा, चांदी,पीतर, बंग और पोलाद ये पाचोंभस्म कर्षभर॥३॥ सहिंजन ज्वालामुखी व सोंठि का काढा बेलके फल

रतन्दुलीयकात् ॥ प्रत्येकंस्वरसैःकुर्याद्यामैकैकंविमर्दये
त् ४ कृत्वागोलंदृढंवस्त्रैर्लवणैःपूरितंन्यसेत् । काचभाण्डे
ततःस्थाल्यांकाचकूपींनिवेशयेत् । वालुकाभिःप्रपूर्याथ
वह्नियामद्वयंभवेत् ५ ततउद्धृत्यतंगोलंचूर्णयित्वाविमि
श्रयेत् । प्रवालचूर्णकर्षेण शाणमात्राविषेणच । कृष्णस
र्पस्यगरलैर्दिवसंभावयेत्तथा ६ तगरंमुशलीमांसीहिमाह्वा
वेतसःकणा । नीलिनीपत्रकंचैलाचित्रकश्चकुटेरकः ७श
तपुष्पादेवदालीधत्तूरागस्त्यमुण्डिकाः । मधूकजातिमद
नारसैरेषांविमर्दयेत् । प्रत्येकमेकवेलंचततःसंशोष्यधारये
त्८वीजपूरार्द्रकद्रावमरिचैःषोडशोन्मितैः । रसोद्विगुञ्जाप्र
मितःसन्निपातेषुदीयते । प्रसिद्धोयंरसोनाम्नासन्निपातस्य
भैरवः ९ तारमौक्तिकहेमानिसारश्चैकैकभागिकाः । द्विभा
गोगन्धकःसूतस्त्रिभागोमर्दयेदिमान् १०कपित्थस्वरसैर्गा
ढंमृगशृङ्गेततःक्षिपेत् । पुटेन्मध्यपुटेनैवसमुद्धृत्यचमर्दये

का रस चौराईरस इन रसमें पहरपहरभर घोटि ॥ ४ ॥ गोलाबांधि कपड़ौटीकरि दो कांचके प्याले एकमें लोनभरि गोला धरि दूसरा लोन पूरित प्याला ढांकि कपड़ौटीकरि तब माटी पात्र के बालुकायंत्रमें धरि दोपहरकी आंचदेय ॥ ५ ॥ ठंढा भये निकारि खरलकरि फिरि मूंगा चूर्ण कर्षभर, विष शाणभर व काले सांपका जहरयुक्त एक दिन खरलकरै फिर कांचकी शीशीमें भरि बालुकायंत्रमें दोपहरकी आंचदे ठंढाभये निकारि चूर्णकरै ॥ ६ ॥ तगर, मुशली, जटामांसी, चोक, जगन्नाथी पीपरि, नीलकीपाती, इलायची, चीता, कटसरैया ॥ ७ ॥ सौंफ, घनतोरई, धतूरा, अगस्त्य, मुंडी, महुआ, चमेली और मैनफल इनसबका रस वा काढ़ा करि क्रम से एकएकवार घोटि सुखाय राखे ॥ ८ ॥ जंभीरीरस वा अदरकरस १६ मरिचों से दोगुंजा प्रमाण रसके साथ सन्निपात में देय यह प्रसिद्ध सन्निपातभैरवनाम रस कहाताहै ॥ ९ ॥ ( अथ ग्रहणीकपाटरस ) चांदी, मोती, सोना और लोहा इनकी भस्म एक एक भाग, शुद्धगंधक दो भाग और शुद्ध पारा तीन भाग ये सब खरलकरि ॥ १० ॥ फिर कैथेके रसमें खरलकरि हरिणके सींगमेंभरि कपड़ौटी

त् ११ वत्लारसैः सप्तवेलमपामार्गरसैस्त्रिधा॥ लोध्रं प्रतिविषा मुस्तं धातकीन्द्रयवाः स्मृताः । प्रत्येकैः स्वरसैर्नित्यं भावना स्यात्त्रिधा त्रिधा १२ माषमात्रो रसो देयो मधुना मरिचैस्तथा । हन्यात्सर्वानतीसारान्ग्रहणीं सर्वजामपि । कपाटो ग्रहणीरोगे रसोऽयं वह्निदीपनः १३ मृतसूताभ्रकं गन्धं यवक्षारं सटङ्कणम् । अग्निमन्थं वचां कुर्यात्सूततुल्यानिमान्सुधीः १४ ततो जयन्तीजम्बीरभृङ्गद्रावैर्विमर्दयेत् । त्रिवासरं ततो गोलं कृत्वा संशोष्य धारयेत् । लोहपात्रे शरावञ्च दत्त्वोपरि विमुद्रयेत् १५ अधो वह्निं शनैः कुर्याद्यामार्द्धं तत उद्धरेत् । रसतुल्यां प्रतिविषां दद्यान्मोचरसं तथा । कपित्थविजया द्रावैर्भावयेत्सप्तधा भिषक् १६ धातकीन्द्रयवामुस्तं लोध्र म्बिल्वं गुडूचिका । एतद्रसैर्भावयित्वा वेलैकैकं च शोषयेत् १७ रसं वज्रकपाटाख्यं शाणैकं मधुना लिहेत् । वह्निं शुण्ठीं विडं बिल्वं लवणं चूर्णयेत्समम् । पिबेदुष्णाम्बुना चानुसर्वं

करि तीस गोयँदा की आचदे ठंढाभये निकारि निकारि खरलकरि ॥ ११ ॥ चरिपारारसमें सातवार खरलकरि फिर तीनवार चिरचिरारसमें खरलकरि फिर लोध, अतीस, मोथा, धवपुष्प, इन्द्रयव और गुर्च इनके रसमें तीन तीनवार क्रमसे खरल करि ॥ १२ ॥ माशाभर रस शहद मरिच मिलाय चाटै तो सब अतीसार व ग्रहणी को दूरिकरै यह ग्रहणीकपाट अग्निको दीपन करताहै ॥ १३ ॥ वज्र कपाटरस ग्रहणी पर ) पाराभस्म, अभ्रकभस्म, शुद्धगन्धक, जवाखार, सुहागा, अरणी बीज और बालवच ये सब समानभागले ॥ १४ ॥ यह रस जैंति, जंभीरी व भंगरा इनके रसमें तीन तीन दिन घोटि गोलाकरि सुखाय लोहेकी कढैया में धरि माटी पात्रसे बंदकरि ॥ १५ ॥ मंद मंद चार घड़ी आंचदे उतारिलेय तब उस रस के समान अतीस व मोचरस डालि कैथा व भांग के रसमें वैद्य सातसात बारघोटै ॥ १६ ॥ फिर धवपुष्प, इन्द्रयव, मोथा, लोध, बेल और गुर्च इनके रसमें एकएक बार घोट सुखायले ॥ १७ ॥ यह वज्रकपाटरस शाणभर शहद के संगखाय ऊपर से चीता, सोंठि, पागानोन, बेल और सैंधव इन सबका समभाग चूर्णकरि उष्णजलके

जांग्रहणींजयेत् १८ तारंवज्रंसुवर्णंचताम्रंसूतंचगन्धकम्। लोहंक्रमविवृद्धानिकुर्यादेतानिमात्रया। १९ विमर्द्यकन्यकाद्रावैर्न्यसेत्काचमयेघटे। विमुच्यपिठरीमध्येधारयेत्सैन्धवैर्भृते। पिठरींमुद्रयेत्सम्यक्ततश्चुल्ल्यांनिवेशयेत् २० वह्निंशनैः शनैः कुर्याद्दिनैकंततउद्धरेत्। स्वाङ्गशीतंचसंचूर्ण्यभावयेदर्कदुग्धकैः २१ अश्वगन्धाचकाकोलीवानरीमुशलीक्षुरी। त्रित्रिवेलंरसैरासांशतावर्याश्चभावयेत्। पद्मकन्दकसेरूणांरसैःकासस्यभावयेत्२२ कस्तूरीव्योषकर्पूरकङ्कोलैलालवङ्गकम्। पूर्वचूर्णादष्टमांशमेतच्चूर्णंविमिश्रयेत् २३ सर्वैःसमांशर्करांचदत्त्वाशाणोन्मितांभजेत्। गोदुग्धद्विपलेनैवमधुराहारसेवकः। तरुणीरमयेद्बह्वीःशुक्रहानिर्नजायते २४ सूतोवज्रमणिर्मुक्तातारंहेमसिताभ्रकम्। रसैःकर्पमितानेतान्मर्दयेदरिमेदजैः २५ प्रवालचूर्णंगन्धश्चद्विद्विकर्षंविमिश्रयेत्। ततोऽश्वग

माय खाय तौ सब ग्रहणी दूरिहोयँ ॥ १८ ॥ ( मदन कामदेवरस ) चांदी हीरा, सोना और तांबा इन चारोंकी भस्म तथा पारा, गंधक व लोहा ये तीनों शुद्ध इन सातोंको क्रमसे वढती भागले ॥ १९ ॥ घीकुवारके रसमें घोटि शीशीमें धरि कपड़ौटीकरि माटीपात्र में नीचे ऊपर नोनधरि बीचमें शीशीधरि संपुटकरि चूल्हेपर धरि ॥ २० ॥ दिनभर मंद मंद आंच वारि फिर निकारि मदारकेदूधमें खरलकरि॥ २१ ॥ असगंध काकोली विना भी असगंध, किमाच, मुशली, तालमखाना और शतावरि इनके रसमें तीन तीन भावना दे फिर कमलकी जड़ कसेरू व कांस इनकी तीन तीन भावनादेय ॥ २२ ॥ कस्तूरी, त्रिकुटा, कपूर, शीतलचीनी, इलायची और लवंग पीसि पूर्वचूर्ण जो भावनादिसे सिद्धकिये का अष्टमांश कस्तूर्यादिचूर्णयुक्त करि ॥ २३ ॥ सबके समान शक्कर मिलाय शाणभरि खाय आठ पैसाभरि दूधपिवै पथ्य मधुरकरै इसके खानेसे बहुत स्त्रियों से गमनकरै परन्तु धातु न घटै ॥ २४ ॥ ( अथ कंदर्पसुन्दररस ) शुद्धपारा, हीरा, मोती, चांदी, सोना व कृष्णाभ्रक ये पांच भस्म सब कर्ष कर्ष भरले खैरकाथमें एकदिन घोटै ॥ २५ ॥ मूंगेका चूर्ण

न्धास्वरसैर्विमर्द्यमृगशृङ्गके। क्षिप्त्वामृदुपुटेपक्त्वाभावये
द्धातकीरसैः २६ काकोलीमधुकंमांसीवलात्रयविशेङ्गुद
म्। द्राक्षापिप्पलिवन्दाकंवरीपर्णीचतुष्टयम् २७ परूषकं
कंसेरुश्चमधुकंवानरी तथा। भावयित्वारसैरासांशोषयि
त्वाविचूर्णयेत् २८ एलात्वक्पत्रकंमांसीलवङ्गागुरुकेशर
म्। मुस्तंमृगमदःकृष्णाजलंचन्द्रश्चमिश्रयेत् २९ एत
च्चूर्णैःशाणमितैरसंकन्दर्पसुन्दरम्। खादेच्छाणमितंरात्रौ
सिताधात्रीविदारिका ३० एतासांकर्षचूर्णेनसर्पिःकर्षेण
संयुतम्। तस्यानुद्विपलंक्षीरंपिबेत्सुस्थितमानसः। रम
णीरमयेद्बह्वीर्हानिकापिनगच्छति ३१ शुद्धरसेन्द्रभागै
कंद्विभागंशुद्धगन्धकम्। क्षिपेत्कज्जलिकांकुर्यात्तत्रती
क्ष्णभवंरजः। क्षिप्त्वाकज्जलिकातुल्यंप्रहरैकंविमर्दयेत्
३२ तत्रकन्याद्रवैर्घर्मेत्रिदिनंपरिमर्दयेत्। ततःसञ्जायते
तस्यसोष्णोधूमोद्गमोमहान् ३३ अथतत्पिण्डितंकृत्वाता

व शुद्धगंधक दोदो कर्ष मिलाय असगंध के रसमें एकदिन घुटाय मृगसींग में भर कपड़ौटी करि थोड़ी आंचमें धरि फूंकदे फिर धवफूलके रस वा क्वाथमें भावनादे॥ २६॥ फिर काकोली तिना आसन, मुलेठी, जटामासी, वरियारा, गुलशकरी, ककई, मसीड़, हिंगवट, मुनक्का, पीपरका वादा, कटसरैया, वनमूंग, क्षुद्रगपर्णी, मापपर्णी॥ २७॥ फालसा, कसेरू, महुआ और किमाचबीज इनसबों के रसमें एक एक भावनादे सुखाय खरलकरि धरिराखै॥ २८॥ इलायची, तज, पत्रज, जटामांसी, लौंग, अगर, केशर, मोथा, कस्तूरी, पीपरि, सुगन्धवाला और कपूर इनका चूर्णकरि॥ २९॥ शाणभरले और शाणभर पूर्वोक्त कन्दर्पसुन्दररस और खांड़, आँवरा व विदारीकंद॥ ३०॥ इन सबको मिलाय कर्षभर घी रातिको खाय विषयीपुरुष दूधपियै सो पुरुष बहुत स्त्रीसंग भोगकरै तौ वीर्यहानि नहीं होतीहै॥ ३१॥ (क्षयीपर लोहरसायन) शुद्धपारा एकभाग व शुद्धगंधक एक भाग इन दोनों को घोटि कजली करि तीन भाग शुद्ध पोलादका चूर्ण कजली संग पहरभर घोटि॥ ३२॥ फिर घीकुआरके रसमें ३ दिन घाममें बैठि घोटै तब घाम और घोटनेकी गरमीसे बहुत

स्वपात्रेनिधायच । मध्येधान्यकुशूलस्यत्रिदिनंधारयेद्बु-
धः ३४ उद्धृत्यतस्मात्खल्वेतुक्षिप्त्वाघर्मेनिधायच। रसैः
कुठारच्छिन्नायास्त्रिवेलंपरिभावयेत् ३५ संशोष्यघर्मेकाथै-
श्चभावयेत्त्रिकटोस्त्रिधा। वासामृताचित्रकाणांरसैर्भाव्यंक्र-
मात्त्रिधा ३६ लोहपात्रेततःक्षिप्त्वाभावयेत्त्रिफलाजलैः।
निर्गुण्डीदाडिमत्वग्भिर्वर्षाभूभृङ्गकुरण्टकैः ३७ पलाशकद-
लीद्रावैर्बीजकस्यशृतेनच। नीलिकालम्बुषाद्रावैर्बब्बूलफ-
लिकारसैः ३८ भावयेत्त्रिस्त्रिवेलंच ततोनागबलारसैः। श-
तावरीगोक्षुरकैः पातालगरुडीरसैः। त्रिस्त्रिवेलंयथालाभं
भावयेदेभिरौषधैः ३९ ततःप्रातर्लिहेदाज्यमधुभ्यांकोलमा-
त्रकम्। पलमात्रंबलाकाथंपिबेदस्यानुपानकम् ४० मास-
त्रयाच्छीलितंस्याद्वलीपलितनाशनम्। मन्दाग्निश्वास-
कासौचपाण्डुत्वाकफमारुतौ ४१ पिप्पलीमधुसंयुक्तंहन्या-
देतन्नसंशयः। वातास्रंमूत्रकृच्छ्रंचग्रहणींचोदरंतथा ४२

धुआं उठैगा ॥ ३३ ॥ जब कड़ाहो गोला बांधि रेंडपत्र लपेट तांबे के पात्र में रख मुख मूंदि धानमें तीन दिन गाड़रक्खै ॥ ३४ ॥ फिर निकारि खैंच घाममें घरि सगुजाके रसमें तीन भावनादे ॥ ३५ ॥ जब सूखिजाय तब सोंठि, मिर्च व पीपरि तीनोंके वीनकाथ करि तीन भावना दे फिर रूसा, गुर्च व चीता इन्हें एक एक के रसमें तीन तीन भावनादे ॥३६॥ जलसे निकारि लोहपात्रमें घरि त्रिफलामें घोटि मेवड़ी, अनारका छिलका, भसींड, भंगरा, कटसरैया ॥ ३७ ॥ पलाश, केलाडण्डरस व विजयसार के रसका काथ, नीलमुण्डीरस, बबूरकी छाल ॥ ३८ ॥ ये सब इन के रस वा काथमें तीन तीन भावनादे फिर बरियारा, शतावरि, गुखुरू व छरहट इनके रसमें तीन तीन भावना देना जो मिलै ॥ ३९ ॥ प्रभात समय आठमाशे रस घृत शहद में खिलावै तिसपर बरियाराकाथ पलभर पिये यह अनुपान है ॥ ४० ॥ तीन महीना सेवनकरै श्वेत बार न होयँ और त्वचाकी झुरीपड़ना दूरहोय मन्दाग्नि, श्वास, खांसी, पांडु, कफ और वायुविकार इनके अर्थ ॥ ४१ ॥ पीपरि, शहदयुक्त खाय तौ वातरक्त, मूत्रकृच्छ्र, ग्रहणी, जलोदर ॥ ४२ ॥

अण्डवृद्धिंजयेदेतच्छिन्नासत्वमधुप्लुतम् । बलवर्णकरंवृ
ष्यमायुष्यंपरमंस्मृतम्४३कूष्माण्डंतिलतैलंचमाषान्नंरा
जिकांतथा। मद्यमम्लरसंचैवत्यजेल्लौहस्यसेवकः २४४॥

इति श्रीशार्ङ्गधरेमध्यखण्डेरसशोधनमारणं
द्वादशोऽध्यायः १२ ॥

इति शार्ङ्गधरस्यद्वितीयखण्डस्समाप्तः ॥

---

तथा अंडवृद्धि न रहै गुर्चका सत और शहदयुक्त देवे तौ बल सुन्दरता व आयुको बढ़ाता है ॥ ४३ ॥ श्वेत कुम्हड़ा, तिल-तैल, उर्दद, राई, मद्य और खटाई इन पदार्थों को लोह खानेवाला त्याग देवै ॥ २४४ ॥

इति श्रीशार्ङ्गधरेमध्यखण्डेभाषाटीकायाद्वादशोऽध्यायः ॥ १२ ॥

इति श्रीशार्ङ्गधरस्यवार्तिकभाषासमेतोद्वितीयखण्डस्समाप्तिमगादितिशिवम् ॥

---

श्रीगणेशाय नमः ॥

# शार्ङ्गधरसंहिता

## भाषाटीकासमेता ॥

### (तृतीयखण्डः)

### प्रथमाध्यायः ॥

स्नेहश्चतुर्विधः प्रोक्तोघृतंतैलंवसातथा । मज्जाचतत्पिबेन्मर्त्यः किञ्चिदभ्युदितेरवौ १ स्थावरोजङ्गमश्चैवद्वियोनिः स्नेहउच्यते । तिलतैलंस्थावरेषुजङ्गमेषुघृतंवरम् । द्वाभ्यांत्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतोमहान् २ पिबेत्त्र्यहंचतुरहंपञ्चाहंषडहंतथा । सप्तरात्रात्परंस्नेहः सात्मीभवतिसेवितः ३ दोषकालाग्निवयसांबलंदृष्ट्वाप्रयोजयेत् । हीनांचमध्यमांज्येष्ठांमात्रांस्नेहस्यबुद्धिमान् ४ अमा

(अथोत्तरखण्डःप्रारभ्यते) प्रथम स्नेहपानक्रिया-स्नेह चारिभांतिका कहिये घृत १ तेल २ वसा कहे "मांसमें मिली चर्बी" ३ हाड़के भीतरकी मज्जा ये चारों स्नेह वैद्य सूर्योदय होते मनुष्य को पिलावै ॥ १ ॥ वे स्नेह दोमकारके हैं स्थावर और जंगम स्थावरकहिये(अचर)जहां उपजै वहीं स्थिररहै ऐसे स्नेह अनेक मकार केहैं उनमेंसे तिलका तेल श्रेष्ठहै जंगमकहे(चर)जो श्वासासहितहैं तिनसे उत्पत्ति घृतादि अनेकनमें घृत श्रेष्ठहै (अथ स्नेहभेद) घी,तेल वैद्य तिसे यम कह घी तेल वसा मिलावै तौ त्रिवृत्कहैं घी,तेल,वसा, मज्जासंयुक्तहो तौ महान्कहतेहैं ॥ २ ॥ (अथ स्नेहपानक्रम) घृत रोगीको तीनदिन पिलावै तेल चारदिन वसा पांच दिन मज्जा छहदिन घृतादि स्नेह सात दिनसे अधिक से अधिक पान करने से आहार होजाता है औषध सदृश गुण नहीं करता है ॥ ३ ॥ (अथ स्नेहमात्रा मकार) वातादि दोष, ऋतुकाल, जठराग्नि, अवस्था और निर्बल, सबल व

त्रयातथाकालेमिथ्याहारविहारतः। स्नेहःकरोतिशोफार्शं तन्द्रांनिद्रांविसंज्ञिताम् ५ अकालेचातिमात्रंवाअसात्म्यं यच्चभोजनम्। विषमाशनयत्प्रोक्तंमिथ्याहारः सकथ्यते ६ स्यादीप्ताग्नयेमात्रास्नेहस्यपलसम्मिता। मध्यमांयत्त्रि कर्षास्याज्जघन्याचद्विकर्षिका ७ अथवास्नेहमात्राः स्युस्तिस्त्रोन्याः सर्वसम्मताः। अहोरात्रेणमहतीजीर्यत्यद्धि तुमध्यमा ८ जीर्यत्यल्पादिनार्द्धेचसाविज्ञेयासुखावहा। अल्पास्याद्दीपनीवृष्यास्वल्पदोषेचपूजिता ९ मध्यमास्नेहनीज्ञेयावृंहणीश्रमहारिणी। ज्येष्ठाकुष्ठविषोन्मादग्रहापस्मारनाशिनी १० केवलंपैत्तिकेसर्पिर्वातिकेलवणान्वित

म्। पेयंबहुकफेवापिव्योषक्षारसमन्वितम् ११ रूक्षक्ष तविषार्त्तानांवातपित्तविकारिणाम्। हीनमेधास्मृतीनांच सर्पिःपानंप्रशस्यते १२ कृमिकोष्ठानिलाविष्टाः प्रवृद्धक फमेदसः। पिबेयुस्तैलसात्म्यायेतैलंदीप्ताग्नयस्तुये १३ व्यायामकर्शिताः शुष्करेतोरक्तमहारुजः। महाग्निमारु तप्राणावसायोग्यानराः स्मृताः १४ क्रूराशयाःक्लेशसहा वातार्तादीप्तवह्नयः। मज्जानंचपिबेयुस्तेसर्पिर्वासर्वतो हितम् १५ शीतकालेदिवास्नेहमुष्णकालेपिबेन्निशि। वातपित्ताधिकेरात्रौवातश्लेष्माधिकेदिवा १६ नस्याभ्य ञ्जनगण्डूषमूर्द्धकर्णाक्षितर्पणे। तैलंघृतंवायुञ्जीतदृष्ट्वादो षबलाबलम् १७ घृतेकोष्णंजलंपेयंतैलेयूषः प्रशस्यते।

घृत, कफवालेमें सोंठ, मिर्च, पीपरि व जवाखार पीसि घृतमें युक्तकरि प्यावै॥ ११॥ (अपर रोगोंपरघृत) रुखाई, उरःक्षत, विषार्त, वात पित्त दोष, हीन-बुद्धि और सुधि भूलना इनमें अवश्य घृत पिलाना श्रेष्ठ कहाहै॥ १२॥ (तैल योग्य रोगी) कृमिविकार, वायुवृद्धि, शरीर कफ और मेदवृद्धि इनमें तेल पिलावै जो तेल उसे स्वाभाविक अहित न हो तो अग्नि दीप्त करेगा॥ १३॥ (वसापान योग्य) जो मनुष्य दंड कसरत व कुश्तीआदि तथा परिश्रम करि दुर्बल और पीड़ितहो धातुक्षीण शुष्करक्त शरीरपीड़ा भस्मक आक्षेपकादि वायु पीड़ित इनमें वसा पिलाना योग्य है॥ १४॥ (अस्थि मज्जा योग्य) दुष्ट कोष्ठको क्लेशित को वायुपीड़ित को प्रबलाग्नि को मज्जा पिलाना योग्य है तथा घी सर्व शरीर को हितदायक है॥ १५॥ (अथ स्नेहपान समय) शीत कालमें दिनको पिलावै उष्णकालमें रात को वात पित्त अधिकवाले को रातको वात कफ अधिकवालेको दिनमें पिलावै॥ १६॥ (घृतादिक कर्म विशेषपर नामके कारण) मर्दनको कुल्लीको मस्तकमें दाबने का कान आंखिमें डालने

१ [illegible] मज्जा मांससारादिपसारयोरिति [illegible] मज्जोक्तामज्जयास इतिद्विरूपकाशकेति॥।

२ आम, अग्नि, पक्व व मूत्र इनके आशय, यकृत् और प्लीहा तथा हृदय, उदर और पुप्फुस य नव कोष्ठ कहात हैं॥

वसामज्ज्ञोः पिवेन्मण्डमनुपानं सुखावहम् १८ स्नेहद्विषः शिशून्वृद्धान्सुकुमारान्कृशानपि। तृष्णातुरानुष्णकाले सह भक्तेन पाययेत् १९ सर्पिष्मती बहुतिला यवागूः स्वल्पतण्डुला। सुखोष्णा सेव्यमाना तु सद्यः स्नेहस्य कारिणी २० शर्कराचूर्णसम्मृष्टे दोहनस्थे घृते तु गाम्। दुग्ध्वा क्षीरं पिबेदुष्णं सद्यः स्नेहनमुच्यते २१ मिथ्याहाराद्विहाराद्वा यस्य स्नेहो न जीर्यति। विष्टभ्य वापि जीर्येत वारिणोष्णेन वामयेत् २२ स्नेहस्याजीर्णशङ्कायां पिबेदुष्णोदकं नरः। तेनोद्गारो भवेच्छुद्धो भक्तं प्रति रुचिस्तथा २३ स्नेहेन पैत्तिकस्याग्निर्यदा तीक्ष्णतरीकृतः। तदास्योदीरयेत्तृष्णां विषमां तस्य पाययेत्। शीतं जलं वामयेच्च पिपासा तेन शाम्य

को घृत वा तेल वातादि दोप सबल निर्बल विचारि वैद्य युक्तकरै॥ १७॥ (अथ स्नेहपानानुपान) घृत उष्णोदकके संगपिये तेल यूपसंयुक्त चरबी हाड़ मज्जा मांड युक्त पिये तौ सुखदहोय यूप मांड़ विधि मध्यखण्डमें देखिकरनी॥ १८॥ स्नेहद्वेषी कहे जिसे स्नेह न भावे तिसे अन्न के संग देना और बालक, बूढ़ा, सुकुमार, दुर्बल व तृष्णायुक्त ऐसे मनुष्यको भातके साथ गरमी में देना॥ १९॥ (स्नेह यवागू) तिल भलेप्रकार कूटि थोड़ाचावलका चरोटारि थोड़ाछान और जल देकर पतला पकायले तब गुनगुना खाय तौ तुरन्त धातु को उत्पन्न करताहुआ शरीर को चिकना करता है॥ २०॥ (अथ घारोष्णे दुग्धविधिः) दोहनी के भीतर मिश्री पीसि घृत मिलाय लिप्तकरै तिस में दुग्ध दुहाय तुरन्त गर्म गर्म पिये तौ तुरन्त धातु उत्पन्न होजावै॥ २१॥ स्नेह पिये पर परिश्रम करने वा कफकृत पदार्थ खानेसे स्नेह न पचाहो वा मलारोध किया हो तौ उष्ण जलसे वमन करावै तौ अजीर्णका दोप मिटता है॥ २२॥ जो स्नेह अजीर्ण की शंका हो तौ तातजल प्यावै अब शुद्धडकार आवै व अन्नपर इच्छाकरै तब जानै कि अजीर्ण शान्त भया॥ २३॥ (स्नेह जन्य पित्तकोप यत्न) पित्तप्रकृतिवाले को स्नेहपान से गरमी होती है प्यास विशेष लगती है उसे ठण्ढाजल पिला वमन करावै तौ प्यासकी उष्मा (गरमी)

यामभारांश्चसेवेतामयमुक्तये ५ येषांनस्यंविधातव्यंव स्तिश्चापिहिदेहिनाम् । शोधनीयाश्चयेकेचित्पूर्वंस्वेद्या श्चतेमताः ६ पश्चात्स्वेद्यागतेशल्येमूढगर्भगदेतथा । स्वे द्याःपूर्वंत्रयःप्लीहभगन्दर्यर्शसांतथा ७ अश्मर्याश्चातुरो जन्तुःशमयेच्छस्त्रकर्मणा । सर्वान्स्वेदान्निवातेचजीर्णाहारे चकारयेत् ८ स्वेदाद्धातुस्थितादोषाः स्नेहक्लिन्नस्यदेहि नः । द्रवत्वंप्राप्यकोष्ठान्तर्गतायान्तिविरेकताम् ९ स्विद्य मानशरीरस्यहृदयंशीतलैःस्पृशेत् । स्नेहाभ्यक्तशरीरस्य शीतैराच्छाद्यचक्षुषी १० अजीर्णीदुर्बलोमेहीक्षतक्षीणः पिपासितः । अतीसारीरक्तपित्तीपाण्डुरोगीतथोदरी ११

कराय बोझ उठवाय ऐसी युक्तियों से कफ मेदयुक्त वायुरोग दूर होताहै ॥ ५ ॥ और नासयोग्य वस्तियोग्य रेचनयोग्यको प्रथम स्वेद निकलाय उपाय करै ॥ ६ ॥ जिस स्त्रीके पेटके भीतर गर्भका शालहो वा मूढगर्भहो इन दोंका गर्भ जब बाहर होजाय तब स्वेदकरै जिस मनुष्यकी प्लीह भगंदर अर्श ॥ ७ ॥ और अश्मरी इन चारों रोगाचों को प्रथम स्वेदन करि शस्त्र उपाय करना उचितहै स्वेदकर्म करने का समय स्थान आहारपचने के अनन्तर जिस स्थान में पवनका प्रवेश न होसकै तहां बैठायके स्वेदकर्मकरै ॥ ८ ॥ "स्वेदकिये पुरुषको बड़े पात्रमें तेलभरि बैठावै तौ वातादिक दोष और रसादि सप्तधातु के विकार मलको पतला करिके उसके साथ निकलजाते हैं यह अन्य ग्रंथका मतहै" और शार्ङ्गधर मत (राय) से स्वेदी मनुष्य के पसीना निकलतेही रसादि सप्तधातुमें स्थित वातादि विकार मलको पतलाकरि निकलजाते हैं ॥ ९ ॥ ( स्वेदीके चित्त स्वस्थकरनेका यत्न ) जिसका स्वेदकरि पसीना निकालनेसे मल पतलाहो चित्त सावधानहो तौ छाती पर चंदन लगाने से सावधानहोगा जिसका शरीर तेलमें भिजोया गयाहै और मल पतला गिरजाइ उसकी आंखोंपर कदली वा केवड़ाके जलमें वस्त्र भिजोयके धरने से चित्त स्वस्थ होगा ॥ १० ॥ स्वेद अयोग्य अजीर्णी दुर्बल प्रमेही उरः क्षतपीड़ित प्यासातुर अतीसारयुक्त रक्तपित्त रोगी पांडुशरीरी उदररोगी ॥ ११ ॥

१ शल्यतंत्र में चीरफार करने के प्रयोगको शस्त्रकर्म कहतेहैं ॥
२ गुदामें पिचकारी लगाने के कर्मको वस्ति कहते हैं ॥

मदार्तोगर्भिणीचैवनहिस्वेद्याविजानता। एतानपिमृदुस्वेदैःस्वेदसाध्यानुपाचरेत् १२ मृदुस्वेदंप्रयुञ्जीततथाहृन्मुष्कदृष्टिषु। अतिस्वेदात्सन्धिपीडादाहतृष्णाक्लमोभ्रमः १३ पित्तासृक्पिटकाकोपस्तत्रशीतैरुपाचरेत्। तेषुतापाभिधःस्वेदोवालुकावस्त्रपाणिभिः १४ कपालकन्दुकांगारैर्यथायोग्यंप्रयुज्यते। ऊष्मस्वेदःप्रयोक्तव्योलोहपिण्डेष्टिकादिभिः १५ प्रतप्तैरम्लसिक्तैश्चकायेवस्त्रावचेष्टिते। अथवातविनाशार्हद्रव्यक्काथरसादिभिः १६ उष्णेघटंपूरयित्वापार्श्वेछिद्रंविधायच। विमुद्यास्यंत्रिखण्डांचधातुजांकाष्ठवंशजाम् १७ षडङ्गुलास्याङ्गोपुच्छान्नाडींयुञ्ज्याद्विहस्तिकाम्। सुखोपविष्टंस्वभ्यक्तंगुरुप्रावरणावृतम् १८ हस्तिशुण्डिकयानाड्यास्वेदयेद्वातरोगिणम्। पुरुषा

मदार्त्त गर्भिणी ऐसे रोगी को स्वेदन न करै जो अवश्य करनाहो तो सूक्ष्म स्वेदले ॥ १२ ॥ ( अल्पस्वेदनविधि ) हृदय अंडवृद्धि नेत्ररोग इनरोगों में थोड़ा स्वेदले अतिस्वेदोपद्रव सन्धिपीडा, दाह, तृष्णा, ग्लानि, भ्रम ॥ १३ ॥ रक्त पित्तसे फुंसी इनके शमन करने के लिये शीतोपचारकरै शान्तिहोय ( अथतापस्वेद ) ताप, वालू, कपड़ा ॥ १४ ॥ हाथ कपडे की गेंद बनायकै और अँगार ये छः भाँतिके तापस्वेद कहे जैसा जहां योग्यहो तैसाकरै ( अथोष्मविधिः ) पत्थरादि तप्तकरि सेंकने को ऊष्मकहै लोहेका गोला वा ईट वा पत्थर तपाय ॥ १५ ॥ उसपर खट्टा पदार्थ थोड़ा छिड़क सुखोष्ण भये लेवै कंबल उढाय स्वेदनकरै दूसरा वातहारी कहे दशमूलादि काथ वा रस ॥ १६ ॥ उष्णकरि घड़े में भरि मुख मूंदि बगल छेदि धातु की वा बांस की टो, हाथ लम्बी नल बनावै गोपूंछ की सूरति तिसके खण्ड तीनकरै एक छः अंगुल बाकीके दो समान पतली ओरसे उस छः अंगुलके टुकड़े का मोटा मुख घड़े के छेद में प्रवेशकर उस में मध्यखण्ड ऊंचा करिजोरै ॥ १७ । १८ ॥ फिर तीसराखण्ड सौंरालगाय गजशुण्ड सा करि तीनों सन्धि मूंदि तब रोगी को घी व तेल लगाय व लेप करि कम्बल उढाय सब ओर से ढक निस्सन्धि

यामृमात्रींवाभूमिमुत्कीर्यखादिरैः १९ काष्ठैर्दग्ध्वातथाभ्यु
दयक्षीरधान्याम्लवारिभिः । वातघ्नपत्रैराच्छाद्यशयानंस्वे
दयेन्नरम् २० एवंमाषादिभिःस्विन्नैःशयानःस्वेदमाचरे
त् । अथोपनाहस्वेदंचकुर्याद्वातहरौषधैः २१ प्रदिह्यदेहं
वातार्तंक्षीरमांसरसान्वितैः।अम्लपिष्टैःसलवणैःसुखोष्णैः
स्नेहसंयुतैः२२ततोग्राम्यानूपमांसैर्जीवनीयगणेनच । द
धिसौवीरकक्षारैर्वीरतर्वादिनातथा २३ कुलित्थमाषगोधू
मैरतसीतिलसर्षपैः । शतपुष्पादेवदारुशेफालीस्थूलजी
रकैः २४ एरण्डमूलबीजैश्चरास्नामूलकशिग्रुभिः । मिशि
कृष्णाकुठेरैश्चलवणैरम्लसंयुतैः २५ प्रसारण्यश्वगन्धा

करि तब उस गजपुटिड का मुख कम्बलके भीतरःखोलि स्वेदनकरै तो पसीना निकसै ( तृतीय ) रोगा के शरीर से बीताभर अधिक लम्बा चौड़ा गढ़ाखोदि द्वादशांगुल गहिरा खैरकी लकड़ी भरि ॥ १९ ॥ फूंकि क्षारझारि गढ़े में दूध व कांजी वा मट्ठा छिड़क वायुहारी रण्डपत्र बिछाय रोगी को सुलाय भारी वस्त्र उढ़ावै तो पसीना निकलै ॥ २० ॥ (चौथा) पूर्वप्रकार गढ़ा तपाय उर्द आदि पानीले छिड़क रण्ड बड़पातादिसे शय्या रचि पूर्ववत् स्वेदनकरै ॥ २१ ॥ ( अथ ग्रन्थान्तरे ) वातहारी द्रव्य घड़े में धरि जलभरि मुंहबन्दकरि चारघड़ी आंच दे उतारिलेय रोगीको उष्णतेल मल खरहरीखाटपर सुलाय कपड़ा उढ़ाय नीचे घड़ाधरि नितम्ब की ओर घटमुखछोर वाफदे पसीना पोंछि पोंछि ले इस उष्ण संज्ञक स्वेदसे रसादिक सातौ धातु के वातादिक दोष पसीने साथ सब निकल जाते हैं ॥ २२ ॥ ( अथोपनाहक्रिया ) दशमूलादि वातहारी द्रव्यों का चूर्णकर उसमें दूध व हरिणादिकों का मांस मिलाय कुछ गर्म कर वायुपीड़ित जो अंगहो उसमें गाढ़ा लेपकर वस्त्र ओढ़ाय पसीना निकाले इस क्रिया को उपनाह कहते हैं ( अथोपनाह महाशाल्वण क्रिया अर्थात् पोटलिकासिक्तविधि ) ग्रामीमांस, जलचरमांस, जीवनीयगण द्रव्य, गोदधि, खञ्जी, जवाखार, खारालोन, वीरतर्वादि गण वा गुलुरूपून ॥ २३ ॥ कुलथी, उड़द, गेहूं, अलसी, तिल, सरसों, सौंफ, देवदारु, निरगुण्डी, मगरैला ॥ २४ ॥ रेंडी, रासन, मूल, सहिंजना, सोवाबीज, पीपरि, नागरोई पांचो

भ्यांबलाभिर्दशमूलकैः।गुडूचीवानरीबीजैर्यथालाभंसमा
हृतैः२६स्विन्नैश्चवस्त्रसम्बद्धैःसदासंस्वेदयेन्नरम्।महाशा
ल्वणसंज्ञोयंयोगः सर्वानिलार्त्तिहृत् २७ द्रवस्वेदस्तुवात
घ्नंद्रव्यक्वाथेनपूरिते । कटाहेकोष्ठकेवापिसूपविष्टोवगाहये
त् २८ सौवर्णेराजतेवापिताम्रआयसदारुजे । कोष्ठकं
तत्रकुर्वीतोच्छ्रायेषट्त्रिंशदङ्गुलम् २९ आयामेनतदेव
स्याच्चतुरष्कसृणितथा । नाभेःषडङ्गुलंयावन्मग्नःक्वाथस्य
धारया ३० कोष्ठकेस्कन्धयोःसिक्तस्तिष्ठेत्स्निग्धतनुर्नरः।
एवंतैलेनदुग्धेनसर्पिषास्वेदयेन्नरम्। एकान्तरेद्व्यन्तरेवा
स्नेहोयुक्तोवगाहने ३१ शरीरेबलमाधत्तेयुक्तस्नेहोवगाह
ने।शिरामुखैरोमकूपैर्धमनीभिश्चतर्पयेत् ३२ जलसिक्त
स्यवर्द्धन्तेयथामूलेङ्कुरास्तरोः। तथाधातुविवृद्धिस्तुस्नेह
सिक्तस्यजायते ३३ नातःपरतरःकश्चिदुपायोवातनाश

लोन ॥ २५ ॥ अनार, कटसरैया, असगन्ध, वरियारा, दशमूल, दुर्वे और किमाचविया इनमें जितने मिलैं ॥ २६ ॥ उन्हें जलमें पीसि तपाय पोटली बांधे सेंकै ठण्ढी परे गरम तवेपर तपाय तपाय सेंकै इस शाल्वण-प्रयोग से सब वायु पीड़ा दूर होती है ॥ २७ ॥ ( अथ द्रवस्वेदविधि ) दशमूलादि वायुहर्ता द्रव्यों का क्वाथ बनाय रोगी कढाउ वा चौकोन कोठर ॥ २८ ॥ सोने, चांदी, तांवा, लोहा वा काठ छत्तीस अंगुल ऊंचा बनाय बैठाय ॥ २९ ॥ वह काढाको रोगी के ऊपर पतली धार से नावै नाभिके छः अंगुल ऊंचे आवैं तब हाथ को हटावै इसीप्रकार एक वा दो दिन टार टार करै इसी भांति तेल, दूध, घृत और द्रवस्वेदन भी करै फिर पवन को बचावै ऐसे दो तीनदिन घृत वा तेल लगाय करै सब नसें और रोमों का मुख खुलि जाता है जो पवन प्रवेश करने पावे तो उनके मुख से स्नेहादि पदार्थ प्रवेश के वायु को निकाल देते हैं शरीर को तृप्त और बलवान् करते हैं ॥ ३० । ३१ । ३२ ॥ दृष्टान्त जैसे जड़में जल सींचनेसे वृक्ष बढ़कर पुष्टहोजाता है तैसेही द्रवसंज्ञक स्वेद से मनुष्य का रोग नाशहोता व उमर बढ़ती है तैसेही रसादि सततधातुओं में वातदोष बढ़ने से

नःशीतशूलांद्युपरमेस्तम्भगौरवविग्रहे।दीप्तेग्नौमार्दवेजा
तेस्वेदनाद्विरतिर्मता ३४ सम्यक्स्विन्नंविमृदितंस्नानमु
ष्णाम्बुभिश्शनैः। भोजयेच्चानभिष्यन्दिव्यायामंचनकार
येत् ३५ इति श्रीशार्ङ्गधरेस्वेदविधिर्द्वितीयोऽध्यायः २॥

शरत्कालेवसन्तेचप्रावृट्कालेचदेहिनाम्। वमनंरेच
नंचैवकारयेत्कुशलोभिषक् १ बलवन्तंकफव्याप्तंहृल्लासा
दिनिपीडितम्। तथावमनसात्म्यंचधीरचित्तंचवामयेत्
२ विषदोषेस्तन्यरोगेमन्देग्नौश्लीपदेर्बुदे। हृद्रोगकुष्ठ
वीसर्पमेहाजीर्णभ्रमेषुच ३ विदारिकापचीकासश्वासपी
नसवृद्धिषु। अपस्मारेज्वरोन्मादेतथारक्तातिसारके ४
नासाताल्वोष्ठपाकेषुकर्णस्रावेद्विजिह्वके। गलशुण्ड्याम
तीसारेपित्तश्लेष्मगदेतथा ५ मेदोगदेरुचौचैववमनंका
रयेद्भिषक्। नवामनीयस्तिमिरीनगुल्मीनोदरीकृशः। ना

पेट वा मलमार्ग में भरभराहटहो तो तेलस्वेदकरै ॥ ३३ ॥ इससेपरे वातनाशक और यत्न नहीं जबताईं स्वेदकरै कि वायुशूल देह जकड़ना भारीपन दूरहोय अग्निदीप्त देह कोमल हलकी हो तब न करै ॥ ३४ ॥ स्वेदकरे पर तेल लगाय सुखोष्ण जलसे न्हाय कफकारी भोजन करै ॥ ३५ ॥

इति श्रीशार्ङ्गधरेउत्तरखण्डेद्वितीयोऽध्यायः ॥ २ ॥

शरद्, वसन्त और प्रावृट्काल के आदि चतुरवैद्य वमन ( छर्दि ) व विरेचन ( दस्त ) को करावै क्योंकि अश्विनीकुमार संहितादि सब ग्रन्थकार ऐसेही कहते आये हैं इसमें मनुष्य की प्रकृति शुद्ध रहती है ॥ १ ॥ ( वमन योग्य ) जिसे वमन करने की सामर्थ्यहो कफ व्याप्तहो हुलसे लार बहती हो जिसे वमन हितहो धीरचित्तहो उसे वमन करावै ॥ २ ॥ विषरोग, स्तन्यरोग, मंदाग्नि, फीलपांव, अर्बुद, हृद्रोग, कुष्ठ, विसर्प, प्रमेह, अजीर्ण, भ्रम ॥ ३ ॥ विदारी, अपची, कास, श्वास, पीनस, अण्डवृद्धि, अपस्मार, ज्वर, उन्माद, रक्तातीसार ॥ ४ ॥ नासा, ओष्ठ, तालुपाक, कर्णस्राव, द्विजिह्वक, गलगण्ड, अतीसार, पित्त, श्लेष्म ॥ ५ ॥ मेद् और अरुचि इन रोगोंमें वैद्य वमन करावै ( वमन अयोग्य ) तिमिरी, गुल्मरोगी,

तिवृद्धोगर्भिणीचनस्थूलोनक्षतातुरः ६ मदार्तोबालको रूक्षःक्षुधितश्चनिरूहितः । उदावर्त्यूर्ध्वरक्तीचदुश्छर्दिः केवलानिली ७ पाण्डुरोगीकृमिव्याप्तः पठनात्स्वरघातकः । एतेप्यजीर्णव्यथितावाम्यायेविषपीडिताः ८ कफव्याप्ताश्चतेवाम्यामधुकक्वाथरयपानतः । सुकुमारंकृशंबालंवृद्धंभीरुंनवामयेत् ९ पीत्वायवागूमाकण्ठंक्षीरतक्रदधीनिच । असात्म्यैःश्लेष्मलैर्भोज्यैर्दोषानुत्क्लिश्यदेहिनः १० स्निग्धस्विन्नायवमनंदत्तंसम्यक्प्रवर्त्तते । वमनेषुचसर्वेषुसैन्धवंमधुनाहितम् ११ वीभत्संवमनंदेयंविपरीतंविरेचनम् । क्वाथ्यद्रव्यस्यकुडवं श्रपयित्वाजलाढके १२ अर्द्धभागावशिष्टंचवमनेष्ववचारयेत् । क्वाथपाने नवप्रस्था ज्येष्ठामात्राप्रकीर्त्तिता १३ मध्यमाषण्मि

उदररोगी, कृश ( दुर्बल ), अतिबूढा, गर्भिणी, मोटा, घावसे व्याकुल ॥ ६ ॥ मदपीडित, बालक, रूक्षदेही, भूखा, निरूहण बस्ति क्रिया, उदावर्ती, ऊर्ध्वरक्ती, छर्दिरोगी, केवल वातार्त्ती ॥ ७ ॥ पाडुरोगी, कृमी और बहुत पढनेके श्रमसे स्वरभङ्गी ऐसे रोगियों को वमन करावै और अजीर्णयुक्त व विषपीडित ॥ ८ ॥ तथा कफव्याप्त इन मनुष्यों को मुलेठी व महुआकी छालका क्वाथ पिलाय वमन करावै और सुकुमार, दुबला, बालक, बूढा और भयभीत इनको कभी वमन न करावै ॥ ९ ॥ ( वमन के पूर्व उपचार ) जिसे वमन करानाहो उसे पहिले पेटभर यवागू, दूध, मट्ठा, दही, मनभावन पदार्थ और कफकारी पदार्थ इनके खाने से दोष ऊपर उभरआते है ॥ १० ॥ तब वमनकी औषध देय तौ वमन अच्छे प्रकार होताहै और स्नेह पानक्रियेको अच्छेप्रकार होताहै वमन योग्य पदार्थ सब वमन प्रयोग में सैंधव वा शहद युक्त औषध हितकारक होती है ॥ ११ ॥ जो तूतिया वा तांबा घृत युक्त देते हैं वह बीभत्स वमनहै जिसे बीभत्स वमन दिये पर रेचनदेना हो तौ घृत न खानेदेय वमन औषध यदि क्वाथका प्रमाण क्वाथकी द्रव्य कुडव भरि कूटिके आढकभर जलमें औटाय ॥ १२ ॥ आधा जलजाय तब उतारिलेय फिर वमन करनेवाले मनुष्यको पिलावे ( वमन क्वाथ पानके का प्रमाण ) वमन क्रियाका क्वाथ नवप्रस्थ पिलावै सो ज्येष्ठमात्राहै ॥ १३ ॥

ताप्रोक्तात्रिप्रस्थाचकनीयसी। कल्कचूर्णावलेहानांत्रि पलंश्रेष्ठमात्रया १४ मध्यमांद्विपलांविद्यात्कनिष्ठांपलस म्मितां।वमनेचाविरेकेचास्युरष्टौपित्तान्तमुत्तमाः १५ षड् वेगामध्यमावेगाश्चत्वारस्त्ववरामताः। वमनेचविरेकेच तथाशोणितमोक्षणे १६ सार्द्धत्रयंदशपलंप्रस्थमाहुर्मनी षिणः। कफंकटुकतीक्ष्णोष्णैःपित्तंस्वादुहिमैर्जयेत्।सस्वा दुलवणाम्लोष्णैस्संसृष्टंवायुनाकफम् १७ कृष्णाराठफलैः सिन्धुकफेकोष्णजलैःपिबेत्। पटोलवासानिम्बैश्चपित्तेशी तजलंपिबेत् १८ सश्लेष्मवातपीडायांसक्षीरंमदनंपिबे त्। अजीर्णेकोष्णपानीयंसिन्धुपीत्वावमेत्सुधीः १९ वम

छःप्रस्थ पिलावे सो मध्यममात्रा है तीन प्रस्थ पिलावै सो छोटी मात्राहै वमन कार्य में कल्कादिक औषध का प्रमाण वमन में कल्क चूर्ण अवलेह तीन तीन पल देना सो वडी मात्राहै ॥ १४ ॥ दो दो पलकी मध्यममात्रा है एक एक पलकी लघुमात्रा जानना वमन कार्य उत्तम, मध्यम व कनिष्ठ तीन भांतिका होताहै (वेगका प्रमाण) जिस मनुष्य को वमन की औषध देय उसके सात वारताई सब दोष गिरैं आठवींवार पित्तगिरै तौ उत्तम वेगहै ॥ १५ ॥ पांचवार में सब दोषगिरि छठींवार पित्त गिरै वह मध्यमवेगहै तीनवार में सब दोषगिरि चौथी वार पित्त गिरे वह कनिष्ठ वेगहै वमनादिक में प्रस्थप्रमाण वमन और रेचन तथा सिरारक्त-मोक्षण अर्थात् फस्तलेने में ॥ १६ ॥ प्रस्थ साढ़ेतेरह पलका जानना दोषविशेष में वमनोपचार द्रव्य कटु तीक्ष्ण उस पदार्थ से वमनकराने से कफार्ती का कफ नाश होताहै मधुर व शीतल पदार्थकरि वमनकराने से पित्त नाश होताहै मधुर खार खटाई उष्ण पदार्थ से कफयुक्त वात नाश होताहै सोंठ, मिर्च व पीपरि ये तीक्ष्णहैं मुनक्का अनारादि मधुर हैं ॥ १७ ॥ (कफमें वमनविधि) कफप्रकृति को पीपरि, मैनफल व सेंधव चूर्णकरि उष्णजल में पिलाने से वारवार कफ गिरैगा पित्तप्रकृति को परवर नीमपत्र चूर्णकरि ठण्डे पानी में पिलानेसे वार वार पित्त गिरैगा ॥ १८ ॥ और कफ, वातपीड़ित को मैनफल दूधमें पिलाने से कफ वात दूर होताहै और सेंधव उष्णजल में पिलाने से अजीर्ण मिटता है ॥ १९ ॥

नंपाययित्वाचजानुमात्रासनेस्थितम्। कण्ठमेरण्डनालेन स्पृशन्तंवामयेद्भिषक् २० ललाटंवमतःपुंसःपार्श्वेद्वौचप्र पीडयेत्। प्रसेकोहृद्ग्रहःकोठःकण्डूदुश्छर्दिताद्भवेत् २१ अतिवान्तेभवेत्तृष्णाहिक्कोद्गारौविसंज्ञता। जिह्वानिःसर्प णंचाक्ष्णोर्व्यावृत्तिर्हनुसंहतिः २२ रक्तच्छर्दिःष्ठीवनंचक ण्ठेपीडाचजायते। वमनस्यातियोगेतुमृदुकुर्याद्विरेचनम्। वदनान्तःप्रविष्टायांजिह्वायांकवलग्रहः २३ स्निग्धाम्ल लवणैर्हृद्यैर्घृतक्षीररसैर्हितः। फलान्यम्लानिखादेयुस्त स्यचान्येग्रतोनराः २४ निःसृतांतुतिलद्राक्षाकल्कलि प्त्वाप्रवेशयेत्। व्यावृत्तेक्षिणघृताभ्यक्तेपीडयेच्चशनैःश नैः २५ हनुमोक्षेस्मृतःस्वेदोनस्यंचश्लेष्मवातहृत्।

वमन करने की रीति वमन औषध पीके दोनों घुटने तोरिके बैठे और रेंड पत्र की डण्डी शुद्धकरि गरे में प्रवेश करै तौ वमन होगा और वमन करनेवाले का मस्तक और दोनों ओरकी पसुरी सहराताजाय इसी रीतिसे वैद्यलोग वमन कराते हैं ॥ २० ॥ ( वमन कोपलक्षण ) जो वमन अच्छी तरह न होय तौ रोगीके मुखसे लार बहै हृदय में पीड़ारहै कोठे में खुजली ये उपद्रव होतेहैं ॥ २१ ॥ (अति वमन उपद्रव ) तृष्णा अधिक, हिचकी, डकार, अज्ञानता, जीभ निकलना, नेत्र चंचलता, संभ्रमचित्त, ठोड़ी जकड़ना ॥ २२ ॥ मुख से रुधिर गिरना, वारवार थूकना और कण्ठपीड़ा ये अतिवमन के लक्षण हैं ॥ ( अतिवान्त चिकित्सा ) जो वमन अधिकहो तौ उसे मृदुरेचनकरै ॥२३॥ (वमनमें जिह्वा ऐंठनेपर चिकित्सा) अति उबकाई,अति जीभ ऐंठजातीहै उसे जो पदार्थ अच्छा लगताहो चिकना वा खट्टा वा सलोना सो घीयुक्त को खवाय उसके मुखमें रखदेना वा दूध, दही व घृत इनमें से कोई में सानि मुखमें राखै और उसके सम्मुख अन्य मनुष्य को खट्टे फलादि खिलावै तो उसे देखने से वामनी की जीभमें पानी छूटै तौ जीभ कोमल होजाती है औरप्रकृति स्वस्थ होती है ॥ २४ ॥ ( अतिवान्त से जीभ बाहर निकल आवै उसका यत्न ) जो उबकाते उबकाते जीभ निकल आवै तौ तिल व द्राखपीसि जीभपर लेपकर बैठायदेय और जो आंखे चंचल भईहों तौ आंखपर घी लगाय धीरे धीरे

रक्तपित्तविधानेनरक्तच्छर्दिमुपाचरेत् २६ धात्रीरसाञ्जनो
शीरलाजाचन्दनवारिभिः । मन्थंकृत्वापाययेच्चसघृतंक्षौद्र
शर्करम् । शाम्यन्त्यनेनतृष्णाद्याःपीडाश्छर्दिसमुद्भवाः
२७हृत्कण्ठशिरसांशुद्धिर्दीप्ताग्निंचैवलाघवम् । कफपित्त
विनाशश्चसम्यग्वान्तस्यचेष्टितम् २८ ततोपराह्णेदीप्ता
ग्निंमुद्गषष्टिकशालिभिः । हृद्यैश्चजाङ्गलरसैःकृत्वायूषंच
भोजयेत् २९तन्द्रानिद्रास्यदौर्गन्ध्यंकण्डूश्चग्रहणीविषम् ।
सुवान्तस्यनपीडायैभवन्त्येतेकदाचन ३० अजीर्णंशीत
पानीयंव्यायामंमैथुनंतथा । स्नेहाभ्यङ्गंप्रकोपंचदिनैकंव
र्जयेत्सुधीः ३१ ॥ इति श्रीशार्ङ्गधरेतृतीयोऽध्यायः ॥ ३ ॥
स्निग्धस्विन्नस्यवान्तस्यदद्यात्सम्यग्विरेचनम् । अ

सहराय देय ॥ २५ ॥ ( वमन में हनुस्तम्भ उपचार ) जो वमन के अन्त में ठोढ़ी जकड़ जाय तो सेंकने व कफवातहारी द्रव्यों के सूंघने से खुलजाती है ( वमन के अन्तमें रक्तगिरने का यत्न ) जो वमांत में रुधिर आनेलगे तो मध्यखण्डमें कहा रक्तपित्तोपचार करै ॥ २६ ॥ ( अति वमन से प्यास पड़ने का यत्न ) जो तृष्णा बढ़ै आंवले का रस, रसौत, खस, धानकी खीलें व लालचन्दन ये पांचों पल भर चारपल ८६ पानीमेंमथिके घी, शहद संयुक्त मिश्री डालिकै पिलावै तो शांति होय ( रसांजन करे रसोत बनाने की विधि ) दारुहल्दीका क्वाथ करि तिसके समान बकरी का दूध मिलाय औटै गाढ़ा करि सुखाय ले उसे रसाञ्जन कहते हैं ॥ २७ ॥ ( वमन उत्तम होने का लक्षण ) जो वमन अच्छा हो तो हृदय, कण्ठ व मस्तक के कफादिकों दोष न रहैं अग्नि दीप्तहो अंग हलका हो कफपित्तजनित विकार नाश होयँ ॥ २८ ॥ ( वमनपर पथ्य ) मूंग सा साठी के चावलादा यूषदेना वा हिरन का मास अथवै खसी मासका यूष दे ॥ २९ ॥ सम्यक् वमन भये तंद्रा, निद्रा, मुखमें दुर्गंध, खाज, संग्रहणी व विषदोष ये रोग नहीं रहते न होते हैं ॥ ३० ॥ ( वमन पर संयम ) भारी व गरिष्ठ पदार्थ, ठंढा जल, परिश्रम, मैथुन, तेलमर्दन व क्रोध जिसदिन वमन करै तो इनसे बचारहै ॥ ३१ ॥ इति श्रीशार्ङ्गधरेउत्तरखण्डेतृतीयोऽध्याय ॥ ३ ॥

(वमनान्तमें विरेचन) प्रथम मनुष्य स्नेह पानादिक कर्मकरि स्नेह कर्मकरै

वान्तरयत्वधःस्रस्तोग्रहणीछादयेत्कफः १ मन्दाग्निगौरवंकुर्य्याज्जनयेद्वाप्रवाहिकाम्। अथवापाचनैरामंबलासंचविपाचयेत् २ स्निग्धस्यस्नेहनैःकार्य्यंस्वेदैःस्विन्नस्यरेचनम्। शरदृतौवसन्तेचदेहशुद्धौविरेचयेत्। अन्यदात्ययिकेकालेशोधनंशीलयेद्बुधः ३ पित्तेविरेचनंदद्यादामोद्भूतेगदेतथा।शरीरजानांदोषाणांक्रमेणपरमौषधम्।वस्तिर्विरेकोवमनंतथातैलघृतंमधु ४ दोषाःकदाचित्कुप्यन्तिजितालङ्घनपाचनैः। येतुसंशोधनैःशुद्धानतेषांपुनरुद्भवः ५ बालवृद्धावतिस्निग्धःक्षतक्षीणोभयान्वितः। श्रान्तस्तृषार्त्तःस्थूलश्चगर्भिणीचनवज्वरी ६ नवप्रसूतानारी

फिर वमन करै तब रेचनकरै सो रेचन उत्तम प्रकार है और प्रथम कर्महीन रेचन करे,कफ नीचेजाय ग्रहणी कहे पित्तधरा अग्निधरा ढाइलेताहै ॥ १ ॥ इसकारण से अग्निमंद, देहभारी, देह जकडना, प्रवाहिका कहे दारुण अतीसार ये रोग उत्पन्न होते हैं जो कर्महीन रेचन शीघ्रदियाचाहै तौ नीचे गिरनेवाला कफ और आव तिसे सूने रंडकीजड़ आदि सेवन कराय पचाय रेचनकरै और भेड, चरक, सुश्रुत व वाग्भट इनका मत यहहै कि प्रथम वमन कराय छःदिन विताय तीन दिन स्नेहपान कराय फिर तीन स्वेद साधित तीन बाद सोरहे दिनमें लङ्घन दे रेचनकरावै ॥ २ ॥ ( रेचनका दूसरा प्रकार ) जो घृत दूधकरि स्निग्ध मनुष्य वा मट्टीके गोला व ईंट करि स्वेदित मनुष्य तिसे रेचन और कन्ता क्वार, कातिक, चैत व वैशाखमें रेचन कर्म किये देह शुद्ध होजाती है और जो वैद्य रोगीका रोग विचार तिनके निवारणार्थ अनुक्तकालमें भी विरेचन करै ॥ ३ ॥ विशेष रेचन योग्य पित्त विकार, आमवायु, उदररोग,नाभान, वायुकोष्ठबद्ध इनरोगों को विशेष शुद्धकरि कराय परमौषध क्रमसे जानना वस्तिकर्म, रेचनकर्म, वमनकर्म, तेल, घृत, शहद यथारोग यत्नकरै ॥ ४ ॥ ( दोष निवारण में उत्कर्ष रेचन ) वातादि दोष लङ्घन पाचनकरि दवजाते हैं परन्तु थोड़े कुपथ किये ते उभर आते हैं और जो रेचनकरि वातादि दोषों से शुद्ध किये शरीर वेग नहीं उभरते ॥ ५ ॥ ( रेचन के अयोग्य ) बालक, वृद्ध, अतिस्नेह पानपर उरःक्षत, क्षीणमनुष्य, भययुक्त, श्रमित, तृषित, स्थूलशरीर,

चमन्दाग्निश्चमदात्ययी ॥ शल्यार्दितश्चरूक्षश्चनविरेचयाविजानता ७ जीर्णज्वरीगरव्याप्तोवातरक्तीभगन्दरी । अर्शःपाण्डूदरोग्रन्थीहृद्रोगारुचिपीडिताः ८ योनिरोगःप्रमेहार्त्तागुल्मप्लीहव्रणार्दिताः । विद्रधिच्छर्दिविस्फोटविसूचीकुष्ठसंयुता ९ कर्णनासाशिरोवक्त्रगुदमेढ्रामयान्विताः । प्लीहशोफाक्षिरोगार्ताःकृमिक्षारानिलार्दिताः । शूलिनोमूत्रघातार्त्ताविरेकार्हानरामताः १० बहुपित्तोमृदुःप्रोक्तोबहुश्लेष्माचमध्यमः । बहुवातःक्रूरकोष्ठोदुर्विरेच्यःसकथ्यते ११ मृद्वीमात्रामृदौकोष्ठेमध्यकोष्ठेचमध्यमा । क्रूरेतीक्ष्णामताद्रव्यैर्मृदुमध्यमतीक्ष्णकैः १२ मृदुर्द्राक्षापयश्चञ्चुतैलैरपिविरिच्यते । मध्यमस्त्रिवृतातिक्ताराजवृक्षैर्विरिच्यते । क्रूरःस्नुक्पयसाहेमक्षीरीदन्तीफलादिभिः १३

गर्भिणी, नवज्वरी ॥ ६ ॥ तुरन्त पुत्रजनिता स्त्री, मन्दाग्नि, अतिमदपीड़ित, शल्यवेधित, क्षतयुक्त और रूक्ष कहे निस्तेज मनुष्य इनको रेचन नहीं देना ॥ ७ ॥ ( रेचनयोग्य ) जीर्णज्वरी, विषपीड़ित, वातरक्त व भगंदर रोगी, अर्शरोगी, पाडुरोगी, उदररोगी, ग्रन्थिरोगी, हृदयरोगी, अरुचिसे पीड़ित ॥ ८ ॥ योनिरोग, प्रमेह, गुल्म, प्लीहा, व्रणी, विद्रधि, छर्दि, विस्फोटक, विसूची, कुष्ठ ॥ ९ ॥ कानरोग, नाकरोग, मस्तकरोग, मुखरोग, गुदारोग, गरमी, यकृत्, सूजन, नेत्ररोग, कृमिरोग, सोम्लादि रोग शूल और मूत्राघात इन रोगन करि पीड़ित मनुष्य को रेचन देवै ॥ १० ॥ ( रेचन तीन प्रकार ) कोमल मध्यम व कराल कोष्ठवेधक जिस मनुष्यकी कोमल प्रकृतिहो उसका कोठा मृदुहै जिसकी केवल प्रकृतिहै, उसका कोठा मध्यम है जिसकी केवल वात प्रकृति हो उसका कठोर कोठा है सो कड़े कोठेवाला रेचन विषम में दुःखपाताहै उसे रेचन करने से मलस्राव शीघ्र नहीं होताहै ॥ ११ ॥ कोमल कोठा समुझि मृदुरेचन करावै मध्यम कोठावाले को मध्यम मात्र विरेचन करावै मृदु मध्यमादिककोष्ठी को मृदु मध्यमादि औषधदे कोमलकोष्ठी को दाख, दूध व रेंडी का तेलयुक्त करि रेचन दे मध्यमकोष्ठी को निशोथ, कुटकी व अमलतास इनका रेचन दे क्रूरकोष्ठी को सेंहुड़ का दूध वा जमालगोटा इनका रेचन दे ॥ १२ । १३ ॥

मात्रोत्तमाविरेकस्यत्रिंशद्वेगैःकफान्तिका । वेगैर्विंशतिभिर्मध्या हीनोक्तादशवेगिका १४ द्विपलंश्रेष्ठमाख्यातं मध्यमंचपलंभवेत् । पलार्द्धंचकषायाणां कनीयस्तुविरेचनम् १५ कल्कमोदकचूर्णानां कर्षमध्वाज्यलेहतः । कर्षद्वयंपलंवापि वयोरोगाद्यपेक्षया १६ पित्तोत्तरेत्रिवृच्चूर्णं द्राक्षाक्काथादिभिःपिबेत् । त्रिफलाक्काथगोमूत्रैःपिबेद्व्योषंकफार्दितः १७ त्रिवृत्सैन्धवशुण्ठीनां चूर्णमम्लैःपिबेन्नरः । वातार्दितोविरेकायजाङ्गलानांरसेनवा १८ एरण्डतैलंत्रिफलाक्काथेनद्विगुणेनवा । युक्तम्पीत्वापयोभिर्वा नचिरेणविरिच्यते १९ त्रिवृताकौटजंबीजं पिप्पलीविश्वभेजम् । मृद्वीकायारसक्षौद्रं वर्षाकालेविरेचनम् २० त्रिवृद्दुरालभामुस्ताशर्करादिव्यचन्दनम्।

उत्तम, मध्यम और कनिष्ठ रेचन प्रमाण मल गिरते गिरते अन्त में कफ गिरे ऐसे तीस वेग आवें सो उत्तम मात्रा है वेगकहे दस्त जिसमें बीस वेग तक अन्तमें कफ गिरे वह मध्यम है जिसमें दश वेग तक कफ गिरे वह हीनरेचन मात्राहै ॥ १४ ॥ ( रेचन क्काथादि प्रमाण ) रेचन में काढ़ा की मात्रा दो पल उत्तम एक मध्यम आधापल कनिष्ठमात्रा है ॥ १५ ॥ ( रेचन कल्कादिक प्रमाण ) कल्क मोदक चूर्ण तीनों का कर्ष कर्ष प्रमाणहै और शहद घृतयुक्त रेचन देय वा रोगीका रोग, अवस्था व बलको देखि दो कर्ष से पलभर तक यथोचित मात्रा देना ॥ १६ ॥ ( रेचनमें द्रव्यप्रकार ) पित्तमें निशोत चूर्ण दाख काथमें गुलकन्द गुलाब फल वडी सौंफके काढे में देय कफ दोषमें सोंठ, मिर्च पीपरि चूर्ण व त्रिफला काथमें पियावें कफदोष दूर होइ ॥ १७ ॥ वातकोप में निशोथ, सोंठ, सैंधव चूर्ण, नींबूरस वा कांजी वा जंगली जन्तुके मांसका यूषयुक्त देइ तो रेचन अच्छाहो वायुकोप शान्तहो ॥ १८ ॥ ( अपर औषध रेचनपर ) रेंडी तेल से दूना त्रिफलाकाथ प्यावै वा दूनादूध उक्त प्यावै झाडा जल्दहो ॥ १९ ॥ ( रेचन ऋतु भेदसे ) निशोथ, इन्द्रयव, पीपरि, सोंठ व दाखके काथ शहद डारि वर्षामें प्यावे ॥ २० ॥ ( शरद में )

द्राक्षाम्बुनासयष्ट्याह्वंशीतलंघनात्यये २१ त्रिवृत्ताचि त्रकंपाठाह्यजाजीसरलावचा। हेमक्षीरीचहेमन्तेचूर्णमु ष्णाम्बुनापिबेत् २२ पिप्पलीनागरंसिन्धुंश्यामात्रिवृता सह। लिहेत्क्षौद्रेणशिशिरेवसन्तेचविरेचनम्। त्रिवृताश र्करातुल्याग्रीष्मकालेविरेचनम् २३ अभयामरिचंशुण्ठी विडङ्गामलकानिच। पिप्पलीपिप्पलीमूलंत्वक्पत्रंमुस्त मेवच २४ एतानिसमभागानिदन्तीचत्रिगुणाभवेत्। त्रिवृदष्टगणाज्ञेयाषड्गुणाचात्रशर्करा २५ मधुनामोद कंकृत्वाकर्षमात्रप्रमाणतः। एकैकंभक्षयेत्प्रातःशीतंवानु पिबेज्जलम् २६ तावद्विरिच्यतेजन्तुर्यावदुष्णंनसेव्यते। पानाहारविहारेषुभवेन्नियन्त्रणंसदा २७ विषमज्वरम न्दाग्निपाण्डुकासभगन्दरान्। दुर्नामकुष्ठगुल्मार्शोगल गण्डभ्रमोदरान् २८ विदाहप्लीहमेहांश्चयक्ष्माणंनयना मयान्। वातरोगंतथाध्मानंमूत्रकृच्छ्राणिचाश्मरीम् २९

निशोथ, जवासा, मोथा, सुगन्धवाला, मिश्री श्वेतचन्दन, मुलेठी, दाख क्वाथमें प्यावै तौ रेचनहो ॥ २१ ॥ ( हेमन्तमें ) निशोथ, चीता, पाढ़ा, जीरा, देवदारु, वच और चूक इनका चूर्ण उष्णजलके साथ पियै तौ रेचनहो ॥ २२ ॥ ( शिशिर व वसन्त में ) पीपरि, सोंठ, सैंधव, विधारा, निशोथ इनका चूर्ण शहद युक्त चाटै तौ रेचनहो ग्रीष्म में निशोथ का चूर्ण शक्कर समभाग युक्तकरि फाकै तौ रेचनहो ॥ २३ ॥ ( रेचन पर अभयादिक मोदक ) हड़, मिर्च, सोंठ, विड़ंग, आंवला, पीपरि, पीपरामूल, तज, पत्रज व मोथा ॥ २४ ॥ ये सब समान भागले जमालगोटा की जड़ त्रिगुण निशोथ अठगुणा शक्कर छ:गुणी ॥ २५ ॥ शहद में मल कर्ष कर्ष भरकी गोली बांधि प्रभात एकखाय शीतलजल पियै ॥ २६ ॥ जब वेग मल को रोंकाचाहै तब तप्तजलपियै और खान पान विहार यत्न से परहेज रक्खे ॥ २७ ॥ तौ विषमज्वर मंदाग्नि, पाण्डु, कास, भगन्दर, दुर्नाम, कुष्ठ, गुल्म, अर्श, गलगण्ड, भ्रम, उदररोग ॥ २८ ॥ दाह, प्लीह, प्रमेह, यक्ष्मा,

अभयामोदकाह्येतेरसायनवराःस्मृताः। पृष्ठपार्श्वोरुज घनकट्यूदररुजंजयेत् । सततंशीलनादेषांपलितानिप्र णाशयेत् ३० पीत्वाविरेचनंशीतजलैःसंसिच्यचक्षुषी । सुगन्धिकिञ्चिदाघ्रायताम्बूलंशीलयेन्नरः ३१निर्वातस्थो नवेगांश्चधारयेन्नस्वपेत्तथा । शीताम्बुनस्पृशेत्क्वापिको ष्णंनीरंपिबेन्मुहुः ३२ वलादौषधपित्तानिवायुर्वान्तेयथा व्रजेत् । रेकात्तथामलंपित्तंभेषजंचकफोव्रजेत् ३३ दुर्वि रक्तस्यनाभेस्तुस्तब्धत्वंकुक्षिशूलता । पुरीषवातसङ्गश्च कण्डूमण्डलगौरवम् । विदाहोरुचिराध्मानंभ्रमश्छर्दि श्चजायते३४तंपुनःपाचनैःस्नेहैःपक्त्वासंस्नेह्यरेचयेत् । तेनास्योपद्रवायान्तिदीप्ताग्नेर्लघुताभवेत् ३५ विरेक

नेत्ररोग, वातरोग, पेटफूलना, मूत्रकृच्छ्र, पथरी ॥ २९ ॥ पीठ, पसुरी, छाती, जांघ, कटि और पेट इनके रोग दूरहों इस अभयामोदक सेवनसे तुरतही वाल पकना मिटै यह रसायनश्रेष्ठहै ॥ ३० ॥ ( रेचनअच्छेप्रकार होनेका यत्न) रेचनौषध पीकै ठंढे जल से आंखें व मुख पोंछै व सुगन्धादि फूल सूंघ पानखा- या करै इस योग के करने से चित्त स्वस्थ रहता है व अच्छी तरह वेग आतेहैं॥ ३१ ॥ ( रेचन समय साधना ) पवन व मलमूत्र को न रोकै न सोवै ठंढा जल न छुवैज्यौंज्यों वेग होय त्यौंत्यौं वारवार तत्तापानी पियै इससे खुलकर मल गिरैगा ॥ ३२ ॥ सम्यक् रेचन में जैसे सम्यक् वमन में कफ और खाईहुई औ- षध से पित्त, वायु व सबदोष मुख से गिरते हैं तैसेही ये सब मलमार्ग से गिरते हैं ॥ ३३ ॥ ( रेचन देने पर वेग न होय तिसके उपद्रव ) जिस मनुष्य को रेचन देने से वेग अच्छी तरह न आवै उसकी नाभिके नीचे कड़ापन और कोष में शूल मल में वायु मिलजाय खजुली, मण्डल, देह जकड़ना, दाह, अ- रुचि, पेटफूलना, भ्रम व छर्दि ये उपद्रव उत्पन्न होते हैं ॥ ३४ ॥ ( अशुद्ध रेचनयत्न ) जिसे रेचन अच्छी तरह न हुआ उसे रातका आरग्वधादि पा- चन दे फिर स्नेहविधि से घृत पिलाय कोठा चिकना करि रेचन देने से शुद्ध रेचन होगा सब उपद्रव शान्त होंगे और जठराग्नि दीप्तहो व देह हलकी होजती।

स्यातियोगेनमूर्च्छाभ्रंशोगुदस्यच।शूलंकफातियोगःस्या
न्मांसधावनसन्निभम् । मेदोनिभञ्जलाभासं रक्तंवापिवि
रिच्यते ३६ तस्यशीताम्बुभिःसिक्तंशरीरंतन्दुलाम्बु
भिः । मधुमिश्रैस्तथाशीतैःकारयेद्वमनंमृदु ३७ सहकार
त्वचः कल्कोदध्नासौवीरकेणवा । पिष्टोनाभिप्रलेपेनह
न्त्यतीसारमुल्बणम्३८अजाक्षीरंपिवेद्वापिवैष्किरंहारिणं
तथा । शालिभिःषष्टिकैःस्वल्पंमसूरैर्वापिभोजयेत् ३९
शीतैःसंग्राहिभिर्द्रव्यैःकुर्यात्संग्रहणंभिषक् । लाघवेमनस
स्तुष्टावनुलोमेगतेनिले ४० सुविरिक्तंनरंज्ञात्वापाचनं
पाययेन्निशि । इन्द्रियाणांवलंबुद्धेःप्रसादोवह्निदीपनम् ।
धातुस्थैर्य्यंवयस्थैर्य्यंभवेद्रेचनसेवनात् ४१ प्रवातसेवा
शीताम्वुस्नेहाभ्यङ्गमजीर्णताम् । व्यायामंमैथुनंवापिनसे
वेतविरेचितः ४२ शालिषष्टिकमुद्गाद्यैर्यवागूंभोजयेत्कृता

है ॥ ३५ ॥ ( अतिविरेक में उपद्रव ) मूर्च्छा, कांच निकरना, पेटमें शूल, कफ अधिक गिरना, मांस के धोवन सदृश गिरना, चरबी सी वा पानी व रुधिर गिरै ॥ ३६ ॥ ( अतिविरेकोपद्रव यत्न ) ठण्डे जल से शरीर पोंछै व गुलाब केवडा छिरके व वस्त्र से पोंछे वा चावलका धोवन शहदयुक्त पीवै और शर्द्द औषध दे मृदुवमन करावै इससे उपशमन होताहै ॥ ३७ ॥ आम की छाल गोदधि व सौवीर इन्हें पीसि कल्ककरि नाभिपर लगावै तो वेग वन्दहो अथवा सौवीर में आम की छाल पीसि नाभि पर लगावै "सौवीर की क्रिया मध्यखण्ड में कही है" ॥ ३८ ॥ ( झाडा वन्द करने को ) बकरी का दूध, शकुनीचिडिया का मांस यूप, भात व मसूरी सत साठीचावलका भात खाय ॥ ३९ ॥ और अनार व ठंडे पदार्थका सेवन करै वेग वन्दहोय ( स्वल्प विरेकमें लक्षण ) शरीर हलका प्रसन्नचित्त स्वस्थ गमन वायु ॥ ४० ॥ ऐसे लक्षण देखि रातिको पाचन देना वा पाचनार्थ 'रेंडमूल, सोंठ, धनियेंका क्वाथ दे" रेचन सेवने से इन्द्रियां बलवान् हों बुद्धि प्रसन्नरहै अग्नि दीप्तहो धातुपुष्टहो व अवस्था बढकर स्थिर होती है ॥ ४१ ॥ ( रेचन पर वर्जित ) बयार, ठण्डा जल

म्। जाङ्गलैर्विष्किराणांवारसैःशाल्योदनंहितम् ॥ ४२ ॥
इति शार्ङ्गधरेउत्तरखण्डेरेचनाऽध्यायश्चतुर्थः ॥ ४ ॥

वस्तिर्द्विधानुवासाख्योनिरूहश्चततःपरम् । वस्ति
भिर्दीयतेयस्मात्तस्माद्वस्तिरितिस्मृतः १ यःस्नेहैर्दीयते
सस्यादनुवासननामकः । कषायक्षीरतैलैर्योनिरूहःसनि
गद्यते २ तत्रानुवासनाख्योहिवस्तिर्यःसोत्रकथ्यते । पू
र्वमेवततोवस्तिर्निरूहाख्योभविष्यति ३ निरूहादुत्तरंचै
ववस्तिःस्यादुत्तराभिधः । अनुवासनभेदश्चमात्रावस्ति
रुदीरितः ४ पलद्वयंतस्यमात्रातस्मादर्द्धापिवाभवेत् ।
अनुवासस्तुरूक्षःस्यात्तीक्ष्णाग्निःकेवलानिली ५ नानुवा
स्यस्तुकुष्ठीस्यान्मेहीस्थूलस्तथोदरी । अस्थाप्यानानुवा
स्याःस्युरजीर्णोन्मादतृड्युताः । शोकमूर्च्छारुचिभयश्वा

तैलस्पर्श, अजीर्ण, श्रम व मैथुन इनसे बचारहे ॥ ४२ ॥ ( रेचनपर पथ्य ) चावल, मूंग की यवागू वा हरिणादि मांसका यूप वा लवा बदेर तीतर मांसका यूप भात में दे ॥ ४३ ॥

इति श्रीशार्ङ्गधरसुधाकरे उत्तरखण्डे चतुर्थोऽध्यायः ॥ ४ ॥

( अथ वस्तिकर्म ) गुदाके भीतर अण्डकोशकी लड़ताई द्रव्यभरि पिच- कारी देनेको वस्ति कहते हैं सो दो प्रकारकी है अनुवासन १ निरूहण २ जिस में घी तैलादि चिकनी वस्तु भरि दीजै उसे अनुवासनवस्ति कहते हैं और काढ़ा, दूध व तेल मिश्रित पिचकारी भरि पीड़ितकरै वह निरूहणवस्ति कहाती है ॥ १ । २ ॥ सो प्रथम अनुवासन वस्ति है पीछे निरूहण है इसी से निरू- हण को उत्तरवस्ति भी कहते हैं ॥ ३ । ४ ॥ ( अनुवासन की द्रव्यका प्रमाण ) स्नेहादि दो पल व एक पलका प्रमाण जानना ऐसे पिचकारी के भेद हैं ( अनुवासन योग्य ) रूक्षप्रकृती वा स्नेहपानरहित को वा अग्नि दीप्त करनेको केवल वातरोगी को ये अवश्य अनुवासन योग्यहैं ॥ ५ ॥ ( अयानुवा- सन अयोग्य निरूहण योग्य ) कुष्ठी, प्रमेही, मोटा शरीर और उदर रोगी ये अनुवासन योग्य नहीं हैं और अजीर्ण, उन्मादी, तृषी, शोक, मूर्च्छा-

सकासक्षयातुराः६नेत्रंकार्यंसुवर्णादिधातुभिर्वृक्षवेणुभिः। नलैर्दन्तैर्विषाणाग्रैर्मणिभिर्वाविधीयते ७ एकवर्षात्तुषड्वर्षंयावन्मानंषडंगुलम् । ततोद्वादशकंयावन्मानंस्याद्ष्टसम्मितम् । ततःपरंद्वादशभिरङ्गुलैर्नेत्रदीर्घता८मुद्गच्छिद्रंकलायाभं छिद्रंकोलास्थिसन्निभम् । यथासंख्यंभवेन्नेत्रंश्लक्ष्णंगोपुच्छसन्निभम् ९ आतुराङ्गुष्ठमानेनमूलेस्थूलंविधीयते । कनिष्ठिकापरीणाहमग्रेचगुटिकामुखम्१०तन्मूलेकर्णिकेद्वेचकार्येभागाच्चतुर्थकात् । योजयेत्तत्रवस्तिंचवन्धद्वयविधानतः ११ मृगाजशूकरगवांमाहिषस्यापिवाभवेत् । मूत्रकोशस्यवस्तिस्तुतदलाभेनचर्मजः। कषायरक्तःसुमृदुस्तीक्ष्णः स्निग्धोदृढोहितः १२

अरुचि, भय, श्वास, कास व क्षय इनसे पीडित को निरूहण वस्ति अयोग्य है ॥ ६॥ परन्तु अनुवासन योग्य है वस्ति कहे ( पिचकारी निर्माण विधि ) नेत्राहे पिचकारी की नल जो गुदामें प्रवेशी जाय सो सुवर्णादि धातुकी, बांस, नरकुल, गजदन्त व मृगसींग की हो और उसका अग्रभाग पन्ना व बिल्लौरका बनावै ॥ ७ ॥ नली योग्य अवस्था जो वर्ष एक से छः वर्षताईं बालक के वस्ति की नली छःअंगुल बनावै और छः वर्ष से बारह वर्षताईं की आठअंगुलकी बनावै और बारह वर्षसे ऊपरवाले की नली बारह अंगुलकी बनावै ॥८॥ (नली छिद्रप्रमाण और निर्माणविधि ) छ अंगुलकी नलीका मंचार करनेवाला मुख मूंग समान करै नीचेका छोटी अंगुली समान और आठ अंगुलकी मटरसा दूसरा मध्य अंगुलीसा बारह अंगुलवाली का झरबेरी के बेर समान दूसरी अंगुली समानराखै नली बहुत चिकनी रहै गोपुच्छ सदृश ॥ ९ ॥ एकओर पतली दूसरी ओर मोटी मोटी ओरके चौथाई भाग में दो छल्ले जड़ेहों तिसमें थैली हरिणादि के मूतने की चढ़ाइ पूर्वोक्त छल्लोंका मय थैली समेत बहुत पुष्ट करै जिसमें थैली औषध न और राहसे निकले तब पिचकारी ठीक जानो ॥ १० । ११ ॥ थैली निर्मित जानो-हरिण, छाग, बराह, बैल व भैंसा इनके मूत्रकी थैली उस नली में लगावैं जो ये न मिलें तो इनके चमडे को कमलपत्र सम काटि

व्रणवस्तेस्तुनेत्रंस्याच्छ्लक्ष्णमष्टाङ्गुलोन्मितम्। मुद्गच्छिद्रंगृध्रपक्षनलिकापरिणाहिच १३ शरीरोपचयंवर्णंबलमारोग्यमायुषः। कुरुतेपरिवृद्धिंचवस्तिःसम्यगुपासितः १४ दिवसान्तेवसन्तेचस्नेहवस्तिःप्रदीयते। ग्रीष्मवर्षाशरत्कालेरात्रौस्यादनुवासनम् १५ नचातिस्निग्धमशनंभोजयित्वानुवासयेत्। मदंमूर्च्छांचजनयेद्द्विधास्नेहःप्रयोजितः १६ रूक्षंभुक्तवतोत्यन्तंबलंवर्णंचहीयते। युक्तस्नेहमतोजन्तुंभोजयित्वानुवासयेत्। हीनमात्रावुभौवस्तीनातिकार्यकरौस्मृतौ १७ अतिमात्रौतथानाहक्लमातीसारकारकौ। उत्तमस्यपलैः षड्भिर्मध्यमस्यपलैस्त्रिभिः १८ पलाधर्द्धेनहीनस्ययुक्तामात्रानुवासने। शताह्वासैन्धवाभ्यांचदेयंस्नेहेचचूर्णकम् १९ तन्मात्रोत्तमम

दोनों ओर छीलि साफ़ करि थैली समान बनाय नलीपर चढ़ावै॥ १२॥ (व्रणादि पिचकारी का प्रमाण) घाव फोड़ा नासूरादि की पिचकारी आठ अंगुल लम्बी मूंग पैठने मुवाफ़िक छेद रहै गृध्र के पक्षसदृश मोटी अतिचिकनी पतली छोटी नासूर व्रणयोग है॥ १३॥ (वस्तिगुण) वस्ति अच्छेप्रकार हो तौ शरीर पुष्ट औ कांति, बल, आरोग्य व आयुवृद्धि करै॥ १४॥ (वस्ति सेचनकाल) वसन्तऋतुमें सन्ध्यासमय स्नेहवस्ति करै अनुवस्ति करना ग्रीष्म वर्षा शरद् में रात को करना॥ १५॥ रोगी को उष्ण चिकना भोजन रात को खिलाय अनुवासन करने से मद या मूर्च्छा उत्पन्न होती हैं और रूखे भोजन से बल व कांति की हानि होय ये दोनों तरह वस्तिकर्म करै ये रोग होते हैं॥ १६॥ १७॥ (वस्तिकर्म में न्यूनाधिकमात्रादोष) अनुवासन वा निरूहण में हीन मात्रा देने से रोग नहीं जाता अति मात्रा देने से आनाह, ग्लानि व अतीसार ये उपजते हैं वस्तिकी उत्तम मात्रा छः पलकी पली को अनुवासन देना मध्यम पलको तीन पलकी॥ १८॥ बलहीन को हीन मात्रा डेढ़पल देना स्नेह में और द्रव्य मात्रा शतावरि सेंधव का चूर्ण छः मासे की उत्तम मात्रा चारि मासे की मध्यम दोमासे की कनिष्ठ जानना (विरेचन पर वस्तिप्रकार) विरे-

ध्यान्ताः पट्चतुर्द्वयमाषकैः । विरेचनात्सप्तरात्रेगतेजात वलायच २० भुक्तान्नायानुवास्यायवस्तिर्देयोनुवासनः । अथानुवास्यंस्वभक्तमुष्णाम्बुस्वेदितंशनैः २१ भोजयित्वायथाशास्त्रकृतंचङ्क्रमणंततः । उत्सृष्टानिलविण्मूत्रंयोजयेत्स्नेहवस्तिना २२ सुप्तस्यवामपार्श्वेनवामजङ्घाप्रसारिणः । कुञ्चितापरजङ्घस्यनेत्रंस्निग्धगुदेन्यसेत् २३ बद्ध्वावस्तिमुखंसूत्रैर्वामहस्तेनधारयेत् । पीडयेद्दक्षिणेनैव मध्यवेगेनधीरधीः २४ जृम्भाकासक्षुतादींश्चवस्तिकाले नकारयेत् । त्रिंशन्मात्रामितःकालःप्रोक्तोवस्तेस्तुपीडने २५ ततःप्रणिहितःस्नेहउत्तानोवाक्छतंभवेत् । जानुमण्डलमावेष्ट्यकुर्याच्छोठिकयायुतम् २६ एकामात्रा भवेदेपासर्वत्रैषविनिश्चयः । प्रसारितैःसर्वगात्रैर्यथावीर्यंप्रसर्पति २७ ताडयेत्तलयोरेनंत्रीन्वारांश्चशनैःशनैः ।

चन किये को सात दिन बिताय बल आने पर ॥ १९ । २० ॥ भोजन कराय अनुवासन वस्तिकरना ( पिचकारी पीड़ित प्रकार ) अनुवासन कर्म के प्रथम तेल लगाय गरम पानी से नहवाय ॥ २१ ॥ यथालिखित भोजन कराय कुछ टहलाय पवन, मल व मूत्र की शङ्का मिटाय ॥ २२ ॥ बाईं करवट पौढाय दहिना गोड़ सिकोड़ बायां पसारि मलमार्ग में घी लगावै ॥ २३ ॥ तब पिचकारी थैली में यथा लिखित स्नेह मात्रा भरि थैलामुख बस्ति का मुख सूत्र से बांधि बायें कर धारि धीरे धीरे मलमार्ग में दो अंगुल प्रवेशै ॥ २४ ॥ तब दहिने हाथ से द्रव्यभरी थैली मन्द मन्द पीड़ित करै जिसमें भीतर पिचकारी देते हैं उस समय जँभाई छींक खांसी न आवै ( रोगीको वस्तिप्रदसमय ) पिचकारी दे तीस मात्रा साईं रोकै इतनी देर में स्नेहादिक अन्दर प्रवेश होजायगा फिर सौ मात्रा तक सीधा सुलावै ( मात्राप्रमाण ) जंघ मण्डल कहे "कटि से घुटनी पर्यन्त" तिसके चारों ओर चुटकी बजाता हाथ घुमावै ॥ २५ । २६ ॥ तो एकमात्राहोय यह सब ग्रन्थन में निश्चय है ( वस्तिके पीछे कृत्य ) वस्ति पीड़ित करि रोगी के पांव हाथ व शरीर फैलाय लम्बा करदे इससे सातों धातु अपने अपने स्थानमें फैल

स्फिजौ चैवं ततः श्रोणीं शय्यां चैवोत्क्षिपेत्ततः ॥२८॥ जाते
विधाने तु ततः कुर्यान्निद्रां यथासुखम् ॥ सानिलः सपुरीष
श्च स्नेहः प्रत्येति यस्य तु ॥ उपद्रवं विना शीघ्रं स सम्यग
नुवासितः ॥२९॥ जीर्णान्नमर्थसायाह्ने स्नेहे प्रत्यागते पु
नः ॥ लघ्वन्नं भोजयेत्कामं दीप्ताग्निस्तु नरो यदि ॥३०॥ अनु
वासिताय देयं स्याद् द्वितीयेऽह्नि सुखोदकम् । धान्यशुण्ठी
कषायो वा स्नेहव्यापत्तिनाशनम् ॥३१॥ अनेन विधिना षड्वा
सप्त वाष्टौ नवाथवा ॥ विधेया बस्तयस्तेषामन्ते चैव निरूह
णम् ॥३२॥ दत्तस्तु प्रथमो बस्तिः स्नेहयेद्बस्तिवङ्क्षणौ। सम्य
ग्दत्तो द्वितीयस्तु मूर्द्धस्थमनिलं जयेत् ॥३३॥ बलं वर्णं च
जनयेत्तृतीयस्तु प्रयोजितः॥ चतुर्थपञ्चमौ दत्तौ स्नेहयेतां
रसासृजौ ॥३४॥ षष्ठो मांसं स्नेहयति सप्तमो मेद एव च ॥ अष्ट

मेतेवमरश्चापिमज्जानंचयथाक्रमम् २५ एवंशुक्रगतान्दो
षान्द्विगुणःसाधुसाधयेत् । अष्टादशाष्टादशकान्बस्तीन्
योनिषेवते ३६ सकुञ्जरबलोश्वस्त्रंजयेत्तुल्योमरप्रभः । रू
क्षायबहुवातायस्नेहबस्तिंदिनेदिने ३७ दद्याद्वैद्यस्तथान्ये
षामन्यांवाधामपाहरेत् । स्नेहोल्पमात्रोरूक्षाणांदीर्घकाल
मनात्ययः ३८ तथानिरूहःस्निग्धानामल्पमात्रःप्रशस्य
ते । अथवायस्यतत्कालंस्नेहोनिर्यातिकेवलः ३९ तस्यान्यो
न्यतरोदेयोनहिस्निग्धस्यतिष्ठति । अशुद्धस्यमलोन्मिश्रः
स्नेहोनैतियदापुनः ४० तथाशैथिल्यमाध्मानंशूलंश्वास
श्चजायते । पक्काशयेगुरुत्वंचतत्रदद्यान्निरूहणम् ४१ ती
क्ष्णंतीक्ष्णौषधैर्युक्ताफलवर्तिर्हितायत्र । यथानुलोमनंवा
युर्मलंस्नेहश्चजायते ४२ तथाविरेचनंदद्यात्तीक्ष्णंनस्यंच

होतेहैं ॥ ३५ ॥ इस प्रकार से नव द्विगुनी अठारह वेग देने से शुक्रधातुका दोष नाश होजाता है ॥ ३६ ॥ और जिसे छत्तीस वेगहों तिसे हाथी घोड़े सदृश बलहो और देवतासमान कांतिहो ( अन्यमत में ) जो रूक्ष वातकरि अधिक पीड़ित हो उसे अनुवासन बस्ति जब जब प्रयोजन जाने तब तब देय ॥ ३७ ॥ और चिकने वा मोटे मनुष्यको जब जब उचित जानै तब तब निरूहणबस्ति देय तो रोग नाश होताहै, भूखे मनुष्य को स्नेहबस्ति हलकी हलकी नित्य-प्रति देय ॥ ३८ ॥ और जो रोग चिरकाल का होय तो निरूहण बस्ति हलकी हलकी नित्यप्रति देय ( स्नेह शीघ्र निकलनेपर ) जब स्नेहादि शीघ्र निकलारे तब निरूहणबस्ति करै इसी रीतिसे जितने वेग देय सबके अंतमें बृंहण देता जाय ( स्नेहस्राव न होनेपर उपद्रव ) जो विरेचन वमनकरि शुद्ध किया बस्तिकर्म किया तिसमें स्नेहादिक रुकनेसे ये उपद्रव होते हैं ॥ ३९।४० ॥ शिथिल गात्र, पेटफूलना, शूल, श्वास, ओझरी कठोर इन उपद्रवके दूरकरने को तीक्ष्ण निरूहण देना ॥ ४१ ॥ तीक्ष्ण औषध युक्त फलवर्ती जिसमें वायु अधोगामी हुई मल युक्त स्नेहको गिरावै तिसे तीक्ष्ण रेचन तीक्ष्ण नास देने से शमन होते हैं ॥ ४२ ॥ जो स्नेहबस्ति करने से कोई उपद्रव न होय और स्नेहादि भीतर रहे

त् ८ स्नेहबस्तिविधानेनबुधःकुर्यान्निरूहणम् । जातेनिरूहेचततोभवेदुत्कटकासनः ९ तिष्ठेन्मुहूर्तमात्रंतुनिरूहागमनेच्छया । अनायातंमुहूर्त्तात्तुनिरूहंशोधनैर्हरेत् १० निरूहैरेवमतिमान्क्षारमूत्राम्लसैन्धवैः । यस्यक्रमेणगच्छन्तिविट्पित्तकफवायवः । लाघवंचोपजायेतसुनिरूढंतमादिशेत् ११ यस्यस्याद्बस्तिरल्पाल्पवेगोहीनमलानिलः । मूत्रार्तिजाड्यारुचिमान्दुर्निरूढंतमादिशेत् १२ विविक्ततामनस्तुष्टिःस्निग्धताव्याधिनिग्रहः । आस्थापनस्नेहबस्त्योस्सम्यग्दानेतुलक्षणम् १३ अनेनविधिनायुञ्ज्यान्निरूहंबस्तिदानवित् । द्वितीयंवातृतीयंवाचतुर्थंवायथोचितम् १४ सस्नेहएकःपवनेपित्तेद्वौपयसासह । कषायकटुरूक्षाश्चकफेकोष्णास्त्रयोमताः १५ पित्तश्लेष्मानिलाविष्टेक्षीरयूषरसैःक्रमात् । निरूहंयोजयित्वाचततस्तदनुवासयेत् १६

अनुवासन वस्तिविधानसे निरूहणवस्ति करै ॥ ८ ॥ ९ ॥ फिर औषध बाहर निकलने के कारण मुहूर्त्त कहे "दोघड़ी" कोंठी "उकडू" बैठावे इतने में औषध गिरै तो अच्छा जो न गिरै तो शोधन कहे रेचन ॥ १० ॥ या भी न गिरै तो जवाखार, गोमूत्र, खट्टे का रस व सैंधव मिलाय फिर निरूहकी देनेसे गिरैगी (अच्छी निरूहलक्षण) निरूह अच्छी होय तो क्रमसे मल, पित्त, कफ व वायु गिरै और शरीर हलका होजाय तो निरूह भला जानिये ॥ ११ ॥ (अशुद्धवस्तिलक्षण) जिसके वस्तिदेने से थोड़ाथोड़ा विकार और मल नहीं निकलगये उसके मूत्रमार्ग में पीड़ा तथा जड़ता और अरुचि होय ॥ १२ ॥ (निरूहस्नेहवस्तिलक्षण) देह हलकी, मन मगन, स्नेह चिकना रोगनाश ये अच्छी वस्ति के लक्षण हैं ॥ १३ ॥ जो चतुर वस्तिकर्म जाननेवाले वैद्य यो निरूहवस्ति करै नहीं तो वस्ति विरुद्ध होती है (निरूहवस्तिदानप्रमाण) निरूहवस्ति एक वा दो वा तीन वा चार बार जैसा दोष वैसा दे ॥ १४ ॥ वातरोग में स्नेहयुक्त निरूह एकवार दे पित्त में दूध दो बार कफ में कषायकटु रूक्षादियुक्त सुखोष्ण कारि तीनवार दे ॥ १५ ॥ त्रिदोषमें क्वाथ दूध मांसरसयुक्त

सुकुमारस्यवृद्धस्यबालस्यचमृदुर्हितः । वस्तिस्तीक्ष्णः प्रयुक्तस्तुतेषांहन्याद्बलायुषी १७ दद्यादुत्क्लेशनंपूर्वमध्ये दोषहरंततः । पश्चात्संशमनीयंचदद्याद्वस्तिंविचक्षणः १८ एरण्डबीजंमधुकंपिप्पलीसैन्धवंवचा । हवुषाफलकल्कश्च वस्तिरुत्क्लेशनःस्मृतः १९ शतावरीमधुकंबिल्वंकौटजंफलमेवच । सकाञ्जिकःसगोमूत्रोवस्तिर्दोषहरःस्मृतः २० शोधनंद्रव्यनिष्क्राथस्तत्कल्कैःस्नेहसैन्धवैः । युक्त्याखजेनसमथितावस्तयःशोधनाःस्मृताः २१ प्रियङ्गुर्मधुकोमुस्तातथैवचरसाञ्जनम् । सक्षीरःशस्यतेवस्तिर्दोषाणांशमनेस्मृतः २२ त्रिफलाक्वाथगोमूत्रक्षौद्रक्षारसमायुताः । ऊषकादिप्रतीवापैर्वस्तयोलेखनास्स्मृताः २३ बृंहणद्रव्यनिष्काथः

क्रमसे घारबार देना तिस पीछे स्नेहवस्ति देना ॥ १६ ॥ सुकुमार वा वृद्ध वा बालक को हलकी निरूह देना, सुकुमारादि की तीक्ष्णवस्ति से बल और आयु घटती है इंद वा आरग्वधादि कडुई कुलथी व यवादि रूक्ष ये द्रव्य आदि मध्यान्त क्रमसे देना प्रथम दोष उभारना मध्य से दोष नाशन व अन्त में दोष क्षीण करि शमनकारक देना ॥ १७ ॥ १८ ॥ (दोष उभारन द्रव्य) रेंडी बीज, महुआछाल, पीपरि, सैंधव, वच और हाऊबेर इनकी पिचकारी में दोष उभरताहै ॥ १९ ॥ (दोपनाशकद्रव्य)-शतावरि, मुलेठी, बेल और इन्द्रयव, इनको काञ्जी में पीसि गोमूत्र युक्त पिचकारी रोगहारक देना ॥ २० ॥ (दोषशमन औषध) निशोथ आदिक शोधन द्रव्यका क्वाथकरि तैल वा सैंधव डारि मथिके दोष शोधन निमित्त इसीका अथवा और द्रव्यको कल्क भी मथिके पिचकारी देना ॥ २१ ॥ मकरापूल, महुआछाल, नागरमोथा और रसौत ये सब समभाग दूधमें पीसि दोषशमनार्थ देना ॥ २२ ॥ (लेखनवस्ति) त्रिफलाक्वाथमें गोमूत्र, शहद व, जवाखार ये द्रव्य समान भागले ऊषकादिगण द्रव्य मिश्रितकरि लेखनवस्ति देना लेखन कहे "जो मेद दूषित तिन रोगिनको दुबलाकरै" ॥ २३ ॥ (बृहणवस्ति) मुसली, गुलरू व केवाचबीज इत्यादि बृंहण द्रव्य है सो धातुको बढाती है इनको क्वाथकरि महुआ की छाल दाख व

१ महोरागादिकों का जो द्रव्य, कर्मा और लेखनवस्ति कहते हैं ॥

कल्कैर्मधुरकैर्युतः। सर्पिर्मांसरसोपेतावस्तिर्योबृंहणोम
तः॥ २४ बदरैरावतीशेलुशाल्मलीधन्वनागरैः। क्षी
रसिद्धःक्षौद्रयुक्तानाम्नापिच्छिलसंज्ञितः २५ अजोरभ्रै
णरुधिरैर्युक्तादेयाविचक्षणैः। मात्रापिच्छिलवस्तीनांपलै
र्द्वादशभिर्मता २६ दत्त्वादौसैन्धवस्याक्षंमधुनाप्रसृति
द्वयम्। विनिर्मथ्यततोदद्यात्स्नेहस्यप्रसृतित्रयम् २७
एकीभूतेततःस्नेहेकल्कस्यप्रसृतिंक्षिपेत्। सम्मूर्च्छिते
कषायेतुचतुष्प्रसृतिसम्मितम् २८ निक्षिप्यविमथ्यदद्या
च्छनिरूहकुशलोभिषक्। वातेचतुष्पलंक्षौद्रंदद्यात्स्नेह
स्यषट्पलम् २९ पित्तेचतुष्पलंक्षौद्रंस्नेहस्यचपलत्र
यम्। कफेषट्पलिकंक्षौद्रंस्नेहस्यैवचतुष्पलम् ३० एर
ण्डकाथतुल्यांशंमधुतैलंपलाष्टकम्। शतपुष्पापलार्द्धेन
सैन्धवार्द्धेनसंयुतम् ३१ मधुतैलकसंज्ञोयंवस्तिर्देयोविलो

अनारादि मधुर द्रव्य का कल्क और घृत तथा मांसरस ये सब पूर्वोक्त क्वाथ में डालि धातु बढाने को पिचकारी देय॥ २४ ॥ ( पिच्छिलवस्ति ) बेरकी छाल, इलायची, लसोडेकी छाल, सेमर, जवासा व सोंठ ये सब समान भाग ले दूध में पीसि शहद॥ २५॥ छाग, मेढा व हरिण इनका रुधिर मिश्रितकरि चतुर वैद्य दोष पिघलाने के लिये पिच्छिलवस्ति को देते हैं इस की मात्रा का प्रमाण बारहपल है ( निरूहणवस्ति प्रमाणविधि ) प्रथम सैंधव कर्ष की एकही संझाई सेंधव कर्षभर, शहद चारपल मर्दन करि छहपल घी दे॥ २६ । २७॥ एकत्र करै इस में दोपल पूर्वोक्त कल्क द्रव्य मिलावै अथवा पूर्वोक्त कल्कद्रव्यका काथ कहे ( काढा ) करि लीजिये ॥ २८॥ आठपल प्रमाण कुशल वैद्य इकट्ठी करि मथि निरूहवस्ति देय निरूहवस्ति की साधारण विधि जानो ( विशेष विधान ) वातमें ४ पल मधु ६ पल स्नेह इकट्ठा करि पिचकारी देना॥२९॥ पित्त में ४ पल मधु ३ पल स्नेह इकट्ठाकरि पिचकारी देय कफ में छहपल मधु ४ पल स्नेह एकत्रकरि देना ॥ ३०॥ ( मधुतैलवस्ति ) एरण्डमूलकाथ ८ पल शहद तेल आठ आठ पल बडी सौंफ व सेंधव आधा आधा पल ये सब एकत्रकरि

